# BIBLIOTHECA INDICA

New Series, Nos. 301, 321, 322, 323, 324 and 334

**Collection of Oriental Works**

Published under the Patronage of the
Hon Court of Directors of the East India Company,
and the Superintendence of the
ASIATIC SOCIETY OF BENGAL.

**volume 71,2**
**Sama Veda Sanhita with the commentary of Sayana Acharya**

Reprint of the edition Calcutta 1871–1878

**Biblio Verlag Osnabrück 1987**

# सामवेदसंहिता,

तत्र

छन्दआर्चिकः,

तत्रापि आग्नेयैन्द्रेति पर्वद्वयात्मकः

अध्यायचतुष्कः प्रथमोभागः

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहितः।



श्रीलक्ष्मी

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

वङ्गसामगेन

टीकितो यथावसरं शोधितश्च।



कलिकाता

गणेशयन्त्रे मुद्रितः

शाका: १९१७।

## ॥ आर्च्चिकस्य परिच्छेद-सूची ॥



परिच्छेदः — पृष्ठं





## ॥ गेयगानस्य परिच्छेद-सूची ॥



परिच्छेदः — पृष्ठं





## ॥ छन्द आर्चिक-परिशिष्टभूतस्य आरण्यगानस्य परिच्छेद-सूची ॥



## ॥ अथ छन्द आर्चिक-परिशिष्ट-परिशिष्टरूपस्य स्तोभस्य परिच्छेद-सूची ॥

## ॥ अथ छन्दआर्चिक-द्वितीय-परिशिष्टस्य परिच्छेद-सूची ॥



## ॥ अथ छन्दआर्चिक-तृतीय-परिशिष्टस्य-परिच्छेद-सूची ॥



## ॥ अथ सायणभाष्यस्य परिच्छेद-सूची ॥



## ॥ छन्दआर्चिकस्य छन्दः-सूची ॥

---

## ॥ छन्दआर्चिकस्य देवता-सूची ॥

———

## ॥ छन्दआर्चिकस्य ऋषि-सूची ॥



---

## ॥ मन्त्राणामकारादिक्रमेण सूची ॥

[ अ ]

परिच्छेदः पृष्ठं

---

॥ नमः सामवेदाय ॥

# सामवेदसंहिता।



## अथ पञ्चमाध्यायः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्या-तीर्थ-महेश्वरम्॥ १ ॥
तृतीयं पर्व सोमस्य पवमानस्य संस्तुतिः।
उच्चातइति गायत्र्यश्चत्वारिंशच्चतुर्युताः* ॥ २ ॥

---

* गतमाग्नेयं पर्व, गतञ्चैन्द्रम्; इदानीमिदं तृतीयं सम्प्रवर्त्तते। अत्र पर्व्वणि सोमस्य देवस्य संस्तुतिः श्रूयते, प्राधान्येनेति यावत्। अस्ति सोमः यज्ञार्थाभिषुत ओषधि-विशेषः—

"सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिम्।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन॥"

(ऋ० १०, ७, १, ४)

-इति श्रुतेः. "सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिमिति, वृथासुतमसोममाह—सोमं यं ब्रह्माणं विदुरिति, न तस्याश्नाति कश्चनायज्वेत्यधियज्ञम्"—इति च यास्ककृत-तद्व्याख्यानात्। स एव सोमः पवमान इत्युच्यते पूयमान इति च तदर्थः। अस्ति च सोमश्चन्द्रमावाचकः, "सोमोरूपविशेषैरोषधिश्चन्द्रमा वा"—इत्यादि यास्कोक्तेः (दै० ५, ५)। तदत्र कतरस्य ग्रहणमित्याशङ्कां वारयितुं पवमानस्येति विशेषणम्। एतेन चन्द्रमसो व्यावृत्तिः। एवञ्चैव पर्व्वणि यावत्य ऋचः श्रूयन्ते विशेषोल्लेखाभावे

तत्र प्रथमे खण्डे—

सैषा प्रथमा।

३ १ २ ३ १ ३र ३ १ २र
उच्चातेजातमन्धसोदिविसद्भूम्यादहे* ।
३ २उ ३ १ ३ १ २
उग्रꣳ शर्ममहिश्रवः॥ १॥ १ †

५ ४ २र र१ १ ७
ओम्॥ (आजिगम्॥) उच्चा। तेजा३तामन्धासा२ः।
१ र र २ १ २ १ २
दिविसद्भूम्याददाइ। उग्रꣳ शा२३र्मा ३। मा२हा२३४।
५र र २ २ ५
औहोवा। उप्। आ२३४वाः॥ १॥

२ १र ५ २ १ ५
(आभीकम्॥) उच्चाते२३४जा। तमन्धा२३४साः।

---

सर्वासामेवासां पवमानः सोमो देवतेत्यं बोधितव्येदं—पावमानं पर्वेति। "उच्चाते"-इति पञ्चम-द्वितीय-चतुर्थस्य प्रथमा ऋक्, इयमेवास्य पर्वणोपि प्रथमा; एतदादि-षष्ठ-प्रथम-द्वितीयान्तिमान्ताः दशचतुष्टयात्मिकाः चतुर्युताश्चत्वारिंशदृचः गायत्र्यः गायत्रीछन्दस्काः।

* "दिविषद्भ्य"-इति ऋ०।

† छ०१,१,८,१ = ऋ०७,१,१८,५=षार०१,१,२२ ;— २,१,१९ —२,१,११ = ज०१,१,१ ;—२,१,१३ ;—६,१,९—१० ;—७,१,११ ;—८,१,११ ;—१०,१,१०—११ ;—११,१,१४ ;—१२,१,१—२ ;—१२,२,७ ;—१३,१,१७ ;—१५,१,३-४-५ ;—१९,१,११ ;—२०,१,६-७-८—९ ;—२०,१,१४=ऊह्य १,२,१।

२ १ ५ २ १र २१ २ १ २
दिवाइसार२३४ङ्ग् । मियाद्दाइ । उग्रꣳशा२३र्मा । मह्याये

१ ३ ५र र ३ १ १ १ १
३ । आ२वा३४ औहोवा । वा२३४५इ ॥ २ ॥

५र र र र २ २
( ऋषभपावमानम् ॥ ) ह्वाह्वाउच्चातेजा । ह्वा३ । ह्वा-

१ ३ ५ २ १ र २ २ २
३इ । तामा २न्धा२३४सा: । दिविसङ्गमिया१दा३दे । उग्रꣳ

३ ५ १ २ ४ ५ ४ ५
शा२३४र्मा । ओमो३ । मह्योवा । आ५वोई६हाइ ॥ ३ ॥

१ र र र ४ ५
( आभीकम् ॥ ) ऊ२३४च्चातेजा५ । तमौहोन्धासा: ।

२ १ र२ २ २ २ ३ ५ १ ऽ २
दिविसङ्गमिया१दा३दे । उग्रꣳशा२३४र्मा । माह्वा३उवा

२ ५
३४३ । आ३४५वोई६हाइ ॥४॥

५ र र २१ १र ऽ
(वाभ्रवे द्वे ॥ ) उच्चातेजा । तम । धासा२३: । ओमो३-

२ १ २र १ २ १र ऽ २ १
वा । दिविसङ्ग् । मियादा१दे२३ । ओमो३वा । उग्राꣳ

२ १र ऽ २ १ ३ ५र र २
शा१र्मा २३ । ओमो३वा३ । मा२ह्वा२३४औहोवा । अवा३-

१ १ १ १ १
ई २३४५ ॥ ५ ॥

५ र र २ १ २ १ २र १र
उच्चातेजा । तमन्धा२३सा: । दिविसङ्ग् । मिया-

२ १ २ २ १ २ २ ३ २ १ २

दा२३दाइ। ऊग्रा२३ हाइ। शार्मा३ हाइ। महा २ होये-

१ २ ५२ २ ३ ५

३। आ२ वा २ ३ ४ औहोवा। ग्वा २ ३ ४ भौः॥ ६॥

५ ४२ ५२ २ ४ १

(इन्द्राण्याः साम॥) उच्चातेजातमा। धासा२३ः।

१२ ५ २ १ २२ १ २ १२ ५ २

ओमो३वा। दिविसद्भू। मियादा१दे२३। ओमो३वा।

१ २ १२ ५ २ १ २ १ २

उग्रा३ शा१र्मा२३। ओमो३वा। महाये३। आ२वा२

५२ २ २ ५

३४औहोवा। ऊ२२३४पा॥ ७॥

५ २ २ २ ४ ५ २ १ २

(श्रैशवे द्वे॥) उच्चातेजातमन्धासाः। दिविसद्भूम्याद-

२ १ ५ ३ २ ४

दाइ। उग्रशा२३४र्मा। महा३इआ५वा६५६ः॥ ८॥

५ २ २ २ ५ २ १ २ २ २

उच्चातेजातमन्धा६साः। दिविसद्भू। म्यादा२३दाइ।

१ २ १ ५ २

उ। ग्रशा२३र्मा। महा२। हा२इ। औ३हो३१इ।

५ २ ३ २ १ ३

अवा२ः। हा२इ। औ३हो३१इ। इया३होइ। इयो२३

२ १ १ १ १

४५वा६५६। ऊ२३४५॥ ६॥

३ २ ३२ ४२ ५ १ ३ २

(दोहसाम॥) उच्चा३४औहोवा। तेजा२। तमा३४५।

३ ५ २ १ र र १र १ ७ २ ३
धा२३४साः। दिविसद्भूम्याददे। ऊग्रꣳशा२३र्मा। महि

२ १ २ ४ ५ ४
श्रवो। औ३होवा। होप्ड्ड। डा॥ १०॥

५ र र र र र र र ५
(दोहीयसाम॥) उच्चातेजातमन्धसोदोहाइदोहाईए।

२ १ र र २र ८ २ ७ २ २ १
दिविसद्भूम्याददे। दो३हाइ। दो२हा३ए। उग्रꣳशा२३

१ ८ २ ८ २ २ १ १ १
र्मा। दो३हाइ। दो३हा३ए। महिश्रा२३वा३४३ः। ओ२

३४५इ। डा॥ ११॥

१ २र १र ४र ५ २ १
(इन्द्राण्याः साम।) उच्चातेजातमन्धसाः। दिवाइ

५ २ १ २र १र ८ २ ८ २
सा२३४द्भू। मिया२ददे। ओम्। ओ३वा। ओ३वा।

१ २ १ १ ८ २ ८ १
ववा२३होइ। उग्रꣳशा२३र्मा। ओ३वा। ओ३वा।

१ १ २ १ २ १ ८ १ ५र र २
ववा२३होइ। महिश्रवो२। या २ ३ ४ औहोवा। ययु

३ १ १ १ १
रे२३४५॥ १२॥

५ र २ ४र ५
(आमहीयवम्॥) उच्चाता३इजातमन्धसाः। दिवा

२ १ २ १ २ १ २ १

इ्मा२रद्भूः१। भिया२३इदा२इ। उग्र२श्शर्मा। मही-

२ २र १११

२३इ। अवाउ। वा३। स्तौषि२३४५॥ १२॥ १

अमहीयुर्ऋषिः*। हे "सोम!"† "ते" तव सम्बन्धिनः "अन्धसः" रसस्य‡ "उच्चा" उपरि¶ "जातम्" जन्म।

---

* "आङ्गिरसः" इति ऋषि-नैगेयः।

† "सोमः" निघण्टौ दैवतकाण्डेऽन्तरिक्ष—विभागीयस्तुति-सप्तमो देवः, वायु-साहचर्याच्च भण्यते, यथा च राजधानीस्तवनेन भवति राज्ञः स्तुतिः, भवति च मासस्तवनेन वर्षस्य स्तुति; तथैवास्य स्तवनेन वायोरेव स्तुतिः। तथाहि—

"यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनः।
वायुः सोमस्य रक्षिता समानां मास आकृतिः॥"

(ऋ० १०, ७, १, ५)

"यत् त्वा देव! प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा। वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्याद्रसहरणाद्वा। समानां संवत्सराणां मास आकृतिः"-इत्यादि यास्ककृतं तद्व्याख्यानम्। अतएव "तिस्र एव देवताः (नि० दै० १, ५)"-इत्याद्युक्तिरदोषा। स च ओषधि-विशेषः, तथाहि "ओषधिः सोमः (सुनोतेर्यदेनमभिषुण्वन्ति) बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन"-इत्यादि नि० ११, २-३-४-५। स च दुग्धाभ-रस-विशिष्ट-वल्लीभ्यः क्षरित-पदार्थः सुतरां दुग्धाभरसरूपः, तथाच श्रूयते—"सोमो दुग्धाभिरक्षाः" (ऋ०३,२,५, ५ द्वितीयः पादः) "सोमो दुग्धाभ्यः क्षरति"-इति च तद्भाष्यम् (५, ३)।

‡"अन्ध इत्यन्ननामाध्यानीयं भवति। * * *। तमोऽप्यन्धउच्यते नास्मिन् ध्यानं भवति न दर्शनमन्धन्तमइत्यभिभाषन्ते। अयमपीतरोऽन्ध एतस्मादेव।"-इत्यादि नि० ५, १।

¶अस्ति हि उच्चैरर्थे उच्चेति, तस्यैव "निपातस्य (६, ३, १३६)-इति दीर्घ रूपमुच्चा-इति।

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २
स्वादिष्ठयामदिष्ठयापवस्वसोमधारया।
१ २ ३ १ २ ३ २
इन्द्रायपातवेसुतः॥ २ ॥२ *

१र २ १ २ १ २ र
(आजिगम॥) स्वादाइष्ठाया। मदाइष्ठाया। पवस्वसो।
१ २ २ १ २ १ २ १
माधा१रा२३या। इन्द्रायापा। तवाइसू२३ता३४३ः। ओ
२३४५इ। डा॥ १४॥

अपिच। "दिवि" द्युलोके "सत्" विद्यमानम् "उग्रम्" उद्गूर्णम्† "शर्म" सुखं‡ "महि" महत्¶ "श्रवः" अन्नञ्च§ "भूम्यादद" [इत्यत्र यमामनन्ति। विसर्जनीयलोपः सांहितिकः] भूमिः भौमजन्यः अस्मात्तशः; भूमिष्ठैरादीयतइत्यर्थः॥ १॥ १

* उ०१,१,१५,१ = ऋ०७,७,१६,१=आर १,१,३ ;—३,१,७=ऊ०१,१,८ ; —८,२, २० ;—१०,२,१० ;—११,२,७ ; —१२,२,४ ; —१३,१,९ ;—१८,१,१५—१६ ;—१९,२, १८ ,—२०,२,२० ;—२१,१,२०=ऊह्य ३,१,२ ;—४,१,११ ;—४,२,१८।

† 'उग्रम् बलवत्'-इति वि०।

‡ 'शर्म शरणम्'-इति वि०। शर्मेति गृह-नामसु चैकविंशतितमं पदम् नै० ३, ४।

¶ महत्, महः, महिः-इति पाठभेदेन पठ्यते नै० ३, ४, १।

§ "श्रवः"-इति अन्ननामसु चतुर्थं पदम् ( नि० २, ७)।

२र १ १ १ २ १
(सुरूपम्॥) स्वादिष्ठया२ इया२इया। मदिष्ठा
१ १ १ २र १ र १
या२। पवस्वसो२। इया२इया। मधारया२। इन्द्राया
१ १ २ १ १ १
पा२। इया२इया। तवाइसू२३ता३४३ः। ओ२३४५इ।
डा॥ १५॥

२र १ १ २ १
(सुरूपोत्तरम्॥) स्वादिष्ठयौहो२। इया। मदिष्ठा
१ १ २र र र १
या२। पवस्वसौहो२। इया। मधारया२। इन्द्राय
१ ११ २ १
पौहो२। इया। तवाइसू२३ता३४३ः। ओ२३४५इ।
डा॥ १६॥

२ १ ५ २ ३र १ ०
(जमदग्नेः शिल्पे द्वे॥) ओइस्वा२३४दी। ष्ठया३मादिष्ठ-
२ ३ ५ १ २ र १र २ १ ५
या। ओ२३४वा। पवस्वसोमधारया३। ओइ२३४न्द्रा।
१ २ ५र र २ र ३ २
या२पा२३४औहोवा। तवेसुता ऽ१ः॥ १७॥

३ २ ३ ५ १ ३र १ ० ० ३
उहुवाइ। स्वा२३४दी। ष्ठया३मादिष्ठया। ओ
५ १ १र १र २ २ ४
२३४वा। पवस्वसोमधारया३। उहुवाइ। इन्द्रा५यपा।
१ ३ ५र र १ ५
तार्वा२३४औहोवा। सू२३४ताः॥ १८॥

४र　५　२　१ २
( सᳲंहितम् ॥ ) स्वादाइष्ठया । मदिष्ठया३ । पावा
४ ५　२र　२　२　४ ५　५　४
३स्वासो । मधारया३ । आइन्द्रा३यापाई । हाउ । त-
वा५इसुताउ । वा ॥ १९ ॥

४र ५　र ४ ५　र ४ ५　र　४र र　४
( शकुलः ॥ ) स्वादिष्ठयामदिष्ठयापवस्वसोमधारयाइ ।
५　२　१　२ २
द्रा५यपा । तवा२इ । म२ । तवा२इ । ऊ२ । तवा३४
५र र　१　५
औहोवा । सू२३४ताः ॥ २० ॥

५र र　र　र　४　५　२　१
( गम्भीरम् ॥ ) औहोहूम् हाणहिया । हा३हाइ ।
१र　२　१　५　२　३　५　५र र र
स्वादाइष्टाया । मो२३४दो । उंइमा२३३दो । औहोहूम्-
र ४　५　२　१　२　२　१　५　०
हाणहिया । हा३हाइ । ष्ठयापाव । स्वा२३४स । औ
३　५　र र र र४　५　१　१　१
स्वा२३४सा । औहोहूम्हाणहिया । हा३हाइ । मधा
२　२　५　२　३　५　र र र　र ४　५
रया । ई२३४न्द्रा । आई२३४न्द्रा । औहोहूम् हाणहिया ।
२　२　१　२　२　५　१　३　५
हा३हाइ । यपातवाइ । सू२३४ताः । औइसू२३४ताः ।
र　र　र　र ४　५　१　१　५र र　१ १
औहोहूम् हाणहिया । हा३हा३४ । औहोवा । ई२
१ १ १
३४५ ॥ २१ ॥

अथ तृतीया।

१२ ३ १ २ ३ १ २ ३ १
वृषापवस्वधारयामरुत्वतेचमत्सरः।
३ १ २ ३ १ २
विश्वादधानओजसा ॥ २ ॥ ३ *

४र ५ र ४ ४ १
(संहितम्॥) स्वादिष्ठयाम। दा५इष्ठया। पवा२।
१ २ १ १ १ १
स्वा२३सो। मधा२राया। आ२३इन्द्रा। या२पा।
७ १ ५
तवा२३। हाउवा३। सू२३४ताः ॥ २२ ॥ २

५र २र १ १
(सोमसाम॥) वृषापवा। स्वधाराया२। मरुत्वताइ।
२ १ २ ३ ५र र २
चमत्सा२३राः। वाइश्वा२३। दा२धा२३४औहोवा। न-
१र ३ १ १ १ १
ओजसा२३४५॥ २३ ॥

मधुच्छन्दा ऋषिः†। हे "सोम!" "इन्द्राय" "पातवे"‡ पातुं "सुतः" अभिषुतस्त्वं "स्वादिष्ठया" स्वादुतमया "मदिष्ठया"¶ अतिशयेन मादयित्र्या "धारया§" "पवस्व" क्षर ॥ २ ॥ २

* उ०१,१,१०,१ = ऋ०७,२,२,४ = ज०१,१,१९; —४,१,१—२—३;—४,२,१ ;—७,१,१—२;—११,२,१४—१५;—१८,१,१८—१९;—२०,१,१;—२२,२,९—१०।

† "वैश्वामित्रः"-इति ऋषि-नैगेयः।

‡ तुमर्थे तवेन् प्रत्ययः (३,४,९)।

¶ "तुश्छन्दसि (५, ३, ५९)"-इतीष्ठन्।

§ करणरूपत्वात्।

४ ५ ६ ५ २ ३ ५
(सोमसाम ॥) वृषाद्दाउ । पा२३४वा । स्वाधारा२३४या ।
३ ५ ३ ५ २ ३ ५ १ २र
मा२३४रू । त्वा२३४ताइ । चामत्सा२३४राः । वाइश्वाद
१ १ ३ ५र १ ३ ५
धा२३ । ना२ओ२३४औहोवा । जा२३४सा ॥ २४ ॥

४ ५र ४ ४ र ५ १ २
(आष्ठुभार्गवम् ॥) वृषापव । स्वधारा६या । मारुत्वता
१ ३ ५ १ २ ३ १
३इ । चामा२त्सा२३४राः । विश्वादा१धा२ । नओ३ ।
१ ५ ५
जा२३४सो६हाइ ॥ २५ ॥

४ ५ ४ २१ २१ ऽ २
(वैश्वदेवम् ॥) आइवृषा । पवा । इहा । औ३हो ।
१र ५ २ १ १ २ १
स्वधारा२३४या । म । रु । त्वते३हाइ । च । मा ।
७ २ ५ र र र र २र
त्सरा२३हा३४इ । विश्वाद्धाहाउ । नओजसाहाउ ।
२ २ १र र ३र १ १ १
वा ३ ४ ३ ओ ३ ४ ५ वा ६ ५ ६ । अस्मेराया२उतश्रवा २ ३
१ १
४ ५ुः ॥ २६ ॥

५ र ३ १ ४ ५ २ १ ३ १
(वैश्वदेवम् ॥) वृषा । पवा३ । एहिया । स्वधा२ । रया३४
३र ४र ५ १ २ ३र ४र ५ १ र २ १ २
औहोवा । मारु३४ । औहोवा । त्वतेचमा१त्सा३राः ।

औ३हो३१ये३। औहो२३४५वा६५६। विश्वादधान
ओजसा२३४५॥ २७॥

(इन्द्रसाम॥) वृषापावा२३। हौहोइ। औ३हो२३४५।
स्वधारायार३। हौहोइ। औ३हो२३४५। मरुत्वा-
ते२३। हौहोइ। औ३हो२३४५। चमात्सारा२३ः।
हौहोइ। औ३हो२३४५। विश्वादाधा२३। हौहोइ।
औ३हो२३४५। नओजासा२३। हौहोइ। औ३हो
२३४३। ओ२३४५इ। डा॥ २८॥

(इन्द्रसाम॥) वृषापावा। औहौहो२३४वा। स्वधा-
राया। औहौहो२३४वा। मरुत्वाते। औहौहो-
२३४वा। चमात्सारा। औहौहो२३४वा। विश्वादाधा।
औहौहो २३४वा। नओजासा। औहौहो२३४वा।
हो५इ। डा॥ २९॥

(यौक्ताश्वम्॥) औहौहोहाइ। वृषा। पवस्वा३धा-

२ १ २ ५ १ ७ १
रायार। माह्र्त्वार३४ताइ। आइ। चमार३। चमार
२ ५ र ४ ५ ४ ५ १ २ ५
त्मा२३४राः। औहोहोहाइ। विश्वा। दधा२ना२३४ओ।
२ ३ ५र र २ ३ १
जासा२३४औहोवा। ओइ। ज्वरआ ॥ ३० ॥

५ र र ४ ५ २ १ २
(यौक्तोत्तरम् ॥) वृषाऔहोहोहाइ। पवा२स्वाधा
२ १ २ ५ ३ २ १
१रायार। माह्र्२त्वा२३४ताइ। चमा३इ। ओइ।
७ २ ५ र र ४ ५ १ २
चमा२त्मा२३४राः। विश्वाऔहोहोहाइ। दधा२ना-
५ १ २ ५र र २ २
२३४ओ। जा२सा२३४औहो।वा। ओइ। जू२ ३ ४-
५
वा ॥ ३१ ॥ ३

## ॥ इति ग्रामे गेये द्वादशः प्रपाठकः ॥

भृगुर्वारुणिर्ऋषिः*। हे "सोम!" त्वं "वृषा" स्तोतॄणामभिमतस्य वर्षकः† सन् "धारया" त्वदीयया "पवस्व" द्रोणकलश‡ मागच्छ। [पवतिर्गतिकर्मा¶। आगतस्त्वं यदास्माभि-

---

* अथवा जमदग्निः भारद्वाजः (अनु०)।

† वृषन्निति नाम्नस्य रूपमिदम्। प्रथमे खण्डे १९९, २०१, २१९, ५०१, ५४५, ७८०, ८३४ पृष्ठासु च व्याख्यातम्।

‡ सोमस्याधारपात्रविशेषम्। अत्रैव चोत्तरत्र ६,१,२,७ — ४,१०—५,९ अनुविदितम्।

¶ निघण्टौ गतिकर्मसु "पवते"-इत्यस्याष्टोत्तरशततमत्वेन दर्शनात् (२,१४)।

अथ चतुर्थी।

२ ३ २ ३१२ ३ १ २ २ १ २
यस्तेमदोवरेण्यस्तेनापवस्वान्धसा।
३ १२ ३ २
देवावीरघशꣳसहा॥ ४॥ ४*

४ ५ १ २ ३ ५
ओम्॥ (भासम्॥) यास्ताइ। मादो। वाराओ२३४वा।
३ ५ ४ ५ १ ६ २ ३ ५ ३
णो२३४याः। ताइना। पावा। स्वा३आओ२३४वा। धा-

रिन्द्राय दीयते तदा] "मरुत्वते" सहाया मरुतो यस्य सन्ति† तस्मै इन्द्राय "मत्सरः"‡ मदकारश्च भव। कीदृशः? "विश्वा"¶ विश्वानि सर्वाणि व्याप्तानि वा धनानि "ओजसा" आत्मीयेन बलेन युक्तः सन् स्तोतृभ्यस्तानि प्रयच्छन् त्वं मादयिता भवेति समन्वयः॥ ३॥ ३

---

* उ०२,१,१५,१= ऋ०७,१,२१,४ = ज०२,१,५;—४,१,१०;—६,२,७;— ९,२,८;—११,२.९—१७—२०;—१२,२,९;—१३,२,१७,—१४,२,११—१२—१३; २०,१,२—३—४ = ऊह्ये १,२,१:—३,१,४— १४—१७।

† अस्ति मरुत् ऋत्विङ्नामसु (३,१८)—रूपनामसु (३,१७)—हिरण्यनामसु च (१,२) निघण्टौ। तत्रैव दैवतकाण्डेऽन्तरिक्षदेवतासु च "मरुतः"-इति दृश्यते। अत्र च तेषामेव देवगणानां ग्रहणम्; तथा च श्रूयते—"अस्ति सोमो"-इत्यादि (प्र०२९२पृ०) मरुतामिन्द्रसहायभूतत्वञ्च "इदमस्य त्वा"-इत्यादौ (प्र०६५६पृ०) श्रूयतएव।

‡ मदिधातोरौणादिके सरप्रत्यये रूपम्। अत चोभरयान्यत्रापि चतुर्षु (६,१,१,३—२,८—११—४,१०) श्रोष्यन्ते मत्सर इति।

¶ सुप आत्वे रूपम् (७,१,३९)।

२३४सा। दाइवा। वाइरा। घाशाओ२३४वा। सा२-
३४हा ॥ १ ॥

(सोमसाम॥) यस्तेमदाः। वराइणियोः। ताइनापावा-
३स्वा३। अन्धसा। दाइवावाइरा३४। हाउ। घशा
५उ॒सहा। हो५इ। डा ॥ २ ॥

(प्राजापत्यम्॥) यस्ता३२इमा२३४दाः। वराइणायो।
आ२३४वा। हो। ओ२३४वा। हाइ। ताइनापव।
स्वआन्धासो। ओ२३४वा। हो। ओ२३४वा। हाइ।
दाइवावाइरो। ओ२३४वा। हो। ओ२३४वा। हा३इ।
घा२शा२३४औहोवा। सहोरयी३ष्टा२३४५ः ॥ ३ ॥

(सोमसाम॥) यस्ताइमा२३दोवरेणियाः। ताइनापव।
स्वआन्धा१सा२। दाइवा२वाइरा२३। घशो२३४वा। सा५
होईहाइ ॥ ४ ॥

अथ पञ्चमी।

३ २उ ३ १ २ ३ १ ० ३ १ २
तिस्रोवाचउदीरतेगावोमिमन्तिधेनवः।

५ र २ ४ ५ ४५ १ २
(भास॒ॗसाम॥) यस्ते। मा३दा। वा। इया। राइणा

१ र २ ० १र १र २ १
१या २ः। ताइनापव। स्व। औ३हो। वाहा। धसा २।

१ १ ३ ५र र २ ३ १
दाइवा२३। वा२इरा२३४ ओहोवा। घशं॒ॗसाहा१॥ ५॥

५ र र र ५ १र १र
(अद्वर्द्धिड़॒ॗसोमसाम॥) यस्तेमदोवरेणियाइए। तेना-

र १र।र र २ १ १ १
पवस्वान्धसा। देवावीरा२३। हाइ। घाशाउवा। सा-

२ १ ५
हाउवा३। ऊ३२३४पा॥ ६॥ ४

अमहीयुर्ऋषिः*। हे "सोम!" "ते" तव "देवावोः"† देवकामः "अघशंसहा" राक्षसानां हन्ता‡ "वरेण्यः" सर्वैर्वरणीयः "मदः" मदकरः "यः" रसोविद्यते तेन रसेन "अन्धसा" आदरणीयेन¶ "पवस्व" क्षर॥ ४॥ ४

---

* "आङ्गिरसः"-इति ऋषि-मैगेयः।

† देवावीरिति 'वीकान्तौ (अदा०उ०)'-इत्यस्य रूपम्, कान्तिरिहेच्छा। देवान् वेति ईष्टे स देवावीः, अन्येषामपीति (६. १, १३७) पूर्वपददीर्घः।

‡ "अघशंसः"-इति स्तेननामसु त्रयोदशं नैघण्टुकम् (३, २४)। 'अघं पापं, यः शंसति, तस्य हन्ता'—इति वि०।

¶ आदरणीयेनान्नेनेति भावः। "अन्धसा अन्नेन'-इत्येव वि०।

१ २　३ १ २
हरिरेतिकनिक्रदत् ॥ ५ ॥ ५ *

५ र र　१　२
(वैष्टम्भे द्वे ॥) तिस्रोवाचाः । उदाइ । उदा३१उ ।
२　५ र र　१ २　२
वाये३ । रा२३४ते । गावोमिमा । तिधाइ । तिधा३१उ ।
२　५　र　२ १　२
वाये३ । ना२३४वाः । हरिरेती । कनाइ । कना३१उ ।
२　५
वाये३ । का२३४दात् ॥ ७ ॥

५ र र　१　२ २　१र र　१
तिस्रोवाचाः । उद्दाइरा३ते । गावोमिमान्तिधा१इ-
२ २　र ३　५　१ २　५र र
ना३वाः । हरिरेतोर२३४हाइ । का२ना२३४ओहोवा ।
०　५
क्रा२३४दात ॥ ८ ॥

२ र १　५　२ र १　२र
(पार्ष्ठौह्वे द्वे ॥) तिस्रोवाचो२३४हाइ । उदीरताइ । गा-
र १　५　२ र १　२ १　५　२
वोमिमा२३४हा तिधेनवाः । हरिराइतो२३४हाइ । क-
१ २　१ ३　५र र　२ १ २ र　१ २ १ १
नाये३ । क्रा२दा२३४ओहोवा । अस्मभ्यक्रातुवित्तमा२-
१ १ १
३४५म् ॥ ९ ॥

---

* उ०१,२,१४,१ = ऋ०६,८,२२,४ = का०१,१,२० ;—७,१,१६ ;— ६,१,७ ; — १५,१,१९ ;—२०,१,१०—११ ; —अष्टौ ३,२,१३ ।

५ ४र र ५ ४५र ४ ५ २र र
तिस्रोवाचउदीरतो। वाहाइ। गावोमिमा३।
१ २ ३ ५ ४ ५ ४ ५ १ २ ५र र
तीधिनार२३४वाः। हारीराइती। का२नार२३४ओहोवा।
२ ५
का२३४दात्॥ १०॥

४ ३ र ४ २ ३र ५
(क्षुल्लकवैष्टम्भम्॥) तिस्रोऽ५वा। चा३उदीरताइ।
१ र २ १ २ १ २ २ १ २
गावोमिम। तिधाइना१वा२३ः। होवा३हाइ। हराइरा१-
१ २ २ १ २ १ २ ५र र
इतौर३। होवा३हाइ। कनाये३। का२दार२३४औहोवा।
२ ५
दीर२३४भाः॥ ११॥

४ र र र ४ २र१र
(पाष्ठौहम्॥) तिस्रोवाचा५उदीरताइ। गावोमिम-
२१र २ १ ऽ २
न्तिधेनवः। हरिरार२३इती। कनौ२। ऊवाइ। हो३वा३।
१ २ ५र र २र १ २ १ २११११
का२दीर२३४ओहोवा। हाओवा। ओवार२३४५॥ १२॥ १

त्रितऋषिः*। "तिस्रोवाचः" ऋगादिभेदेन चिविधाः†

*—"आप्त्यः"—इति ऋषि-नैगेयः।

†—"चत्वारिवाक्परिमिता"-इत्यादौ (ऋ० १, २२, ८, ४५) श्रुतौ तु व्यावहारिक्या वाचा वाचां चतुष्ट्वम्। तथाच तस्यैव यास्ककृतं व्याख्यानम्—"ओङ्कारो-महाव्याहृतयश्चेत्यार्षम्; नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः; मन्त्रः कल्पो ब्राह्मणं, चतुर्थी व्यावहारिकीति याज्ञिकाः; ऋचो यजूंषि सामानि, चतुर्थी व्यावहारि

अथ षष्ठी ।

१ १　　२ १ २ ३ १ २ ३ १ २
इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
३ २ ३ १ २ ३ १ २
अर्कस्य योनिमासदम् ॥ ६ ॥ ६ *

४ र र　　२ १　१ १
( इषोवृधीयम् ॥ ) इन्द्रायेन्दाउ । मरुत्वताइ पवस्वा-

"उदीरते" स्तुतीः प्रोद्गायन्ति ऋत्विजः । "धेनवः" आशिरेण प्रीणयित्र्यः "गावः" "मिमन्ति"† शब्दायन्ति दोहार्थम् । "हरिः" हरितवर्णः सोमश्च "कनिक्रदत्"‡ शब्दं कुर्वन्ति गच्छति कलशम्¶ ॥ ५ ॥ ५

---

* उ०९,१,११,१= ऋ०७,१,४०,१=ज०३,१,१६—१७—१८—१९—२०—२१ ;—८,१,४ ;—१०,२,४ ;—१६,१,१२ ;—२२,२,१४ कल्पे १,१,१० ।

चीति नैरुक्ताः ; सर्पाणां वाग् वयसां क्षुद्रस्य सरीसृपस्य, चतुर्थी व्यावहारिकीत्येके । पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादः । अथापि ब्राह्मणं भवति—सा वै वाक् सृष्टा च तुर्धा व्यभवदेष्वेव लोकेषु त्रीणि, पशुषु तुरीयम् ; या पृथिव्यां साग्नौ सा रथन्तरे, यान्तरिक्षे सा वायौ सा वामदेव्ये, या दिवि सादित्ये सा बृहति सा स्तनयित्नौ ; अथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति—या च देवानां, या च मनुष्याणाम्"-इति नि० पू०१, ९ ।

†—'मा शब्दे ( जु० आ० )'-इत्यस्य पुरुषव्यत्ययेन । ३, १, ८५ ) रूपम् ।

‡—निरन्तरशब्दकरणेऽर्थे विद्यमानस्य क्रुरादेरुभयपदिनः क्रन्देः सार्वकालिके (३, ४, ६ ) लुङि "दाधर्ति (७, ४, ६५ )"-इत्यादिनाच् लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपातितः ।

¶—द्रोणमिति प्रसिद्धम् ।

१ २ १ १ ३ ४
मा२। धुमत्तमाः। अर्कस्ययो२। निमा२३। सा२-
३ ५र र २१र २
दा२३४ औहोवा। इषीवृधे१॥ १३॥

१ ५ ३ ५ २ १
(इन्द्रसाम॥) आ२३४इन्द्रा। या२३४इन्द्रा। मरु-
२ १ ५ ३ ५ २ १ २ १
त्वते३। पा२३४वा। स्वा२३४मा। धमात्तमा३ः। आ-
५ ३ ५ २१र २ ३ १ १ १ १
२३४र्का। स्या२३४यो। निमासदा२३४५म्॥ १४॥

२र १ १ २ र र
(वैश्वदेविदं॥) इन्द्रायाइन्दो२३। हा। औ३होवा।
१ १ २ र २ २ १ २ १
मरुत्वाते२३। हा औ३होवा। पवस्वामा२३। हा।
२ र २ १ १ २ र २
आ३होवा। धुमत्तामा२३ः। हा। औ३ होवा। अर्क-
१ १ २ र र र १ १
स्यये२३। हा। औ३होवा। निमासादा२३म्। हा।
२ र २ १
औ३होवा३४३। ओ२३४५इ। डा॥ १५॥

४ ५र र र ४ ४ १ २
इन्द्रायेन्दो। ए५। मरु। त्वताइ। पवस्वमधु-
१ २ १ ऽ २ १ २
मत्ता२३माः। ऊवाइ। हो३वा। अर्कास्या२३यो। ऊ-
१ ऽ २ १र २ १
वाइ। हो३वा। निमासा२३दा३४३म्। ओ२३४५इ। डा।
॥ १६॥

५ र र र    २ १ २ २
(आग्नेये द्वे ॥) इन्द्रायेन्दोहाउ । म । रु । त्वतेश्हाउ ।
१ २ १ ७ २ १ ७ २
पवस्वमधु । मा । तमार३हाउ । अर्का । स्ययोर३हा३इ ।
१ ५ ४ ५
निमार३ । होर३४वा । सा५दोई्हाइ ॥ १७ ॥

५ र र ४ ५ ४ ५ २ १ २ १ २
इन्द्रायेन्दोवा । ओवा । मरुत्वतोवा । ओवा ।
१ २ १ २ १ २ २ ४ ५
पवस्वमोवा । आवा । धुमत्तमोवा । ओवा३ । अर्काहाउ ।
४ ५ २ १ २ १ ५ ४ ५
स्ययोहाउ । निमोवा३ओर३४वा । सा५दो६हाइ ॥ १८ ॥

४ ५र र र ४ ५ र ४ १
(वैश्वदेवम् ॥) इन्द्रायेन्दोमरुत्वाते । ओहाइ पव-
२ १ २ ऽ २ २ ५ १ ७
स्वमधमत्तमः । ओ३हा३४३ । ओ३४हा । आर्कस्यायोर३ ।
१ ३ ५र र २ ३ ५
नार३मार३४ओहोवा । उप् । सार३४दाम् ॥ १९ ॥

५ र र र ५ १ २
(आग्नेयम् ॥) इन्द्रायेन्दोमरुत्वाईताइ । पवस्वम ।
१ २ ५ र ५ ४ ५
धुमात्ता१मार३४ः । अर्कस्ययोनिमा६हाउ । सा५दोई्हाइ
॥ २० ॥ ६

कश्यप ऋषिः* । हे "इन्दो" सोम !† "मधमत्तमः"

---

* "मारीचः" इति ऋषि-मैगेयः ।

† ऋ० ९।६४ पृ०३० ।

अथ सप्तमी।

१ १ ३ १र २र ३ १र २र ३ २

असाव्यᳫ॰ꣳशुर्मदायाप्सु दक्षोगिरिष्ठाः।

३ २उ ३ १ २

श्येनोनयोनिमासदत्॥ ७॥ ७*

४ ५ १ २

(श्येनवानि चत्वारि॥) आसा। वियᳫ॰शुर्मा३१उवा२३।

५ ४ ५ ४ ५ २ २ १ १ १ १

दा२३४या। आप्सुदाक्षाः। गिरा३१उवायि३। ष्ठा२३४५ः।

२र १र २ ५

श्येनोना२३यो। निमा३१उवा२३। सा२३४दात्॥ २१॥

४ ५र ४ १ ७ १ ७ १

असावियां। शुर्मदा२। य। आप्सुदाक्षा२ः। गा-

२र १ २ १ २ ५ ४

इरिष्ठाः। श्याइनो१नायो२३। निमो२३४वा। सा५दो-

५

६हाइ॥ २२॥

अतिशयेन मधुमान् "अर्कस्य" अर्चनीयस्य† यज्ञस्य "योनिं" स्थानं "आसदम्"‡ उपविष्टुं "मरुत्वते" "इन्द्राय" इन्द्रार्थं "पवस्व" क्षर॥ ६॥ ६

---

* उ० ३,२,१६,१=ऋ० ७.१,२४,४,= आर १,१,२१= क २,१,१ ;—७,२,१८ ;—१६,१,४ ;—२०,२,१।

† प्र० ८८८ पृ० ९०। अर्कइति अर्चते रूपम्।

‡ 'आसदम् आसीद' इति वि०।

५ र　३ २ ३　५　१ ७　१　३　१
अस । वियाओ२३४वा । भूमेदायो । ओ२३४वा । आ-
२ ३　५　२ १र　१ ३　५　१२ १र　र
प्साओ२३४वा । दत्तोगिराइ । ष्ठाओ२३४वा । श्येनोनयो-
र २ ३ १ १ १ १
निमासदा२३४५त् ॥ २३ ॥

५ र　१ २ ३　५　२ १　२　३　५
अस । वियौवाओ२३४वा । भुमदायौ । वाओ२३४वा ।
३ २ ३　५　१　२ ३　५
अप्सु । दत्तौवाओ२३४वा । गिराइ । ष्ठौवाउ२३४वा ।
र　३ २ ३　५　१　० ३　५
श्येनः । नयौवाओ२३४वा । निमा । सादौवाओ२३४वा ।
४
होपुइ । डा ॥ २४ ॥

४ ५र　४　५　२
( च्यावनानि चत्वारि ॥ ) असा । व्युर्वाहाइ । अप्-
१　र र　र　र　१　२
भुर्मदायाप्सुदत्तोगिरिष्टाउर्वा२३होइ । श्या२३इनो३ ।
१ ३　५र र　२ २र २ २ १ १ १ १
ना२योर२३४औहोवा । निमासदा२३४५त् ॥ २५ ॥

४ ५र　४　५र ४　५　१　२　१
असाव्यंभुः । औहोवाहाइ । मदा२३या । आ-
२ र　२　१　२ २　१　३　५र र
प्सुदत्तोगिरिष्ठाः । श्याइनोना३योइ । नार्इमा२३४औहो-
२　३　५
वा । उप् । सा२३४दात् ॥ २६ ॥

अथाष्टमी।

२ ३ १२ ३१२ ३ १२
पवस्व दक्षसाधनो देवेभ्यः पीतये हरे।

३२ २ ५र ५ ५र ४
इहा३१२३४। इहा। साव्यꣳ शुर्मदाय। इहा।
२ १ र २ ३ ५ १र १र ३ २
अप्सुदक्षोगिरिष्ठा३४५ः। ई२३४ हा। श्येनोनयोरनिमा-
२ ५ १ ३२ ३ ५
३४५। ई२३४हा। आ२सदा३४५त्। ई२३४हा॥ २७॥

३ ५ ५ ५ ५
असा२३४। वियꣳ शुः। मदा२३४याई। हाउ।
२ ५ ५ २१ ५ १ २
आप्सुदा२३४क्षाः। गिराइष्ठा२३४हाइ। श्याइनोना३-
२ १ २ १ ५ ५
योः३। नाइमा२३हा३४३इ। सा२३४दोईहाइ॥ २८॥ ७

जमदग्निर्ऋषिः*। "गिरिष्ठाः" पर्वते जातः "अंशुः" सोमः "मदाय" मदार्थं "असावि" अभिषुतः। "अप्सु" सतीवरीषु "दक्षः"† प्रवृद्धश्च भवति। किञ्च। "श्येनोन" यथा श्येनो वनादागत्य स्थानमासीदति तद्वद् "अयं" सोमः "योनिं" स्वकीयस्थानम्‡ "आ सदत्"¶ आसीदति॥ ७॥ ७

---

* "भार्गवः"-इति ऋषि-नैगेयः।

† दक्षइति बलनामसु नैघण्टुकम् २, ९। 'दक्षः शीघ्रः'-इति वि०।

‡ द्रोणकलशमिति यावत्।

¶ लेटो रूपम् (३, ४, ७)

२ १ २  ३ २ ३ १ २
मरुद्भ्योवायवेमदः ॥ ८ ॥ ८ *

४ ५  २  ४र  ५  १
( प्राजापत्ये द्वे ॥ ) पवस्वदौ । हौहोवाहाइ । च्चा-
१र  ऽ  २  १  २  ५र
साधनाइः । औ३हो३४इ । औ३हो३४इ । औहो ।
३र २  २१र २  १  २ ३र २ऽ  २  २
वाहाइ । देवेभ्यःपाइ । तयेहराइइ । औ३हो३४इ ।
र  ५र  ३र २  १ २र  ऽ  २  २  र ५र
औहो । वाहाइ । मरुद्भ्योवा३ । औ३हो३४इ । औहो ।
३र  २  १  ३  ५८ र  २  ५
वाहाइइ । या२वा२३४औहोवा । मा२३४दाः ॥ २९ ॥

४ ५  ४र ५  ५  २र १र  र  १
पवस्वदक्षसाधनः । ओ६वा । देवेभ्यःपीतया२ओइ ।
२  १ २र  १  ४  ५  ४
हरा२इ । मरुद्भ्योवा२ । ओ२३ । यवोवा । मा५दो६
५
हाइ ॥ ३० ॥ ८

दृढच्युत आगस्त्य ऋषिः । हे "हरे" हरितवर्ण पाप-हर्त्तर्वा सोम ! "दक्षसाधनः" दक्षोबलन्तस्य साधकः † "मदः" मदकरश्च‡ त्वं "पवस्व" क्षर । किमर्थम् देवेभ्यः इन्द्रादिभ्यः

---

* उ०१,१,१०,१ = ऋ० ६,८,१५,१ = उ० १,२,८ ;—१५,२,९ ;—१६,२,१ = ऊह्य १.१,९ ।

† 'दक्षसाधनः शीघ्रसाधनः'-इति वि० ।

‡ 'मदः मदनीयः'-इति वि० ।

अथ नवमी।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रसोमोअक्षरन्* ।

१ २ ३ २
मदेषुसर्वधाअसि ॥ ९ ॥ ९†

४ ५ १र २ २
( आद्यं वैदन्वतम् ॥ ) पारी। स्वाणोगिरिष्ठाः। प-

१ २ ५ १र १ १ २ ऽ
वा२इत्रे२३४सो। मोअक्षारा२न्। मदाइषूसा३। ई३-

२ २ १ ५ ४ ५
या३। वँधा२३४वा। आ५सो६हाइ ॥ ३१ ॥

४ ५ १र २ २
( द्वितीयं वैदन्वतम् ॥ ) प। यँपारी। स्वानोगिरिष्ठाः।

१ ३ ५ १र १ १ २ २
पवा२इत्रे२३४सो। मोअक्षारा२न्। मदाइषूसा३हा३।

१ ३ ५र २ २ १ ३ १ १ १ १
वा२धा२३४औहोवा। ए३। असी२३४५ ॥ ३२ ॥

"पीतये"‡ पानाय। तथा "मरुद्भ्यः" वायवे च पीतये पानाय "पवस्व" क्षर ॥ ८ ॥ ८

---

* "सोमो अक्षाः"-इति उत्तर-व्याख्याने वि०।

† उ०४,१,१७,१=ऋ०४,८,८१=ऋ०२,२,८—९—१०;—८,१,९;—९,२,६;—१०,१,१८;—१२,१,४;—१४,१,२;—१५,१,८—९—१०—११—१२;—१५,१,७=ऊह्ये २,१,२०;—२,२,१३;—४,१,१४;—६,१,१२।

‡ "मन्त्रे वृषेषपच (३, २, ९६)"-इति क्तिन्प्रदातव्य।

३ र ४ २ ४ ५
( तृतीयं वैदन्वतम् ॥ ) पाऽपूरी । स्वानो३गा३इरिष्ठाः ।
१ १ २र १ २र ३ २ १ २ १ २र १ ४
पवित्रे सो । मो अक्षरात् । पवित्रे । सोमो२३ । क्षा-
५ १ २ २ ५ ४ २ १र
रात् । ओइ । मदौ । वा३४३ओ२३४वा । पुवा । सर्वधाः ।
२ १ ३ ५र र २ २ १र ३
असायि३ । मा२दा२३४औहोवा । ए३ । पुसर्वधाअसी-
११ १ १
२३४५ ॥ ३३ ॥

ऽ २ १ २ २र २ १
( चतुर्थं वैदन्वतम् ॥ ) औ३होइ । इहहाहहाइ ।
२ ५ २ ३ ५ २ २ ५
औरहो२३४वा । पराइस्वा२३४ नो । गिरा२३४इष्ठाः ।
२ ३ ५ २ ३ ५ २ ३ ५
पावित्रे२३४सो । मोअक्षा२३४रात् । मदाइषू२३४सा ।
२ ३ ५ ऽ २ १ २ २र २ १ ३
वधाआ२३४सी । औ३होइ । इहहाहहाइ । औरहो-
२ १ ३ १ १ ११
२३४५वा६५६ । ए३ । उपा२३४५ ॥ ३४ ॥

४ ५
(आङ्गिरसस्य पदस्तोभौ द्वौ ॥ ) पा । यैंस्वानाः ।
२ १ ३र २ १ १
गा२इ । रिष्ठा२या । हाहाइ । ओवा२३होइ ।
२ १ ७ ३र १ १ २
पावित्रेसो । मोअक्षारा२त् । हाहाइ । ओवा२३होइ ।

मदा२इषुसा। हाहाइ। ओवा२३हो। वधो२३४वा। आ५सो६हाइ ॥ ३५ ॥

पर्यौहोवाहाइस्वाना:। गा२इ। रिष्ठा२या। ओ२३४। होहिइ। हाहा। होवा। होवा। पवित्रेसो। मोअ चारा२त। ओ२३४। हाहिइ। हाहा। होवा। मदा २इषुसा। ओ२३४। हाहाइ। हाहा। होवा। हो वा३। वधो२३४वा। आ५सो६हाइ ॥ ३६ ॥ ९

अस्या: परस्याश्च कश्यपोऽसित* ऋषि:। अयं "सोम:" "पवित्रे"† "पर्य्यचरत्" परिचरति। "स्वान:" सुवान:‡ अभिषूयमाण: "गिरिष्ठा:" गिरिस्थायी गिरौ वर्त्तमान इत्यर्थ:। स त्वं "मदेषु" मादकेषु स्तोतृकेषु "सर्वधा असि" सर्वस्य धाता दाता वा भवसि॥

"स्वान::"-"सुवान:"-इति, "अचरन्"-"अचा"-इति च साम्नऋच: पाठ: ॥ ८ ॥ ९

---

* अथवा कश्यपो देवल: (ऋ० अनु०)।

† 'पवित्रे ऊर्णमये'-इति वि०। पवित्रञ्च दशापवित्रमित्यनुपदम् (इतश्चतुर्थे) वक्ष्यति सायण:।

‡ साप्तमिकबहुलवचनात् उवङ् विकल्प: (७, ३, ९७)।

अथ दशमी ।

१ २ ३२ ७ २ ३ १ २र ३क २र ३ २
परिप्रियादिवःकविर्वयाꣳसिनप्त्योर्हितः ।
३ १ २ ३ १ २
स्वानैर्याति*कविक्रतुः ॥ १० ॥ १० †

॥ चतुर्थ-दशति ॥

५ र ४ ५ १ र
( पूर्व्वमौर्णायवम् ॥ ) परिप्रियादिवःकावौः । वयाꣳ
र र र २ १ १ ऽ
सिनप्तोर्हितः । स्वानैर्या२३ती । आया२ । इया२ई-
२ ३ २१ ३ ५र र ३ १ १ १ १ १
३या । कविक्रतो२ । या२३४औहोवा । ई२३४५ ॥ ३७ ॥
४ ४ १ ऽर
( उत्तरमौर्णायवम् ॥ ) परिप्रिया५दिवःकवाइः । वया
र २१ र र २१ र र २ १
२हो१वाꣳसिनप्त्रो१वो१र्हितः । स्वानैर्या२३ती । ऊवा ।
१ १ २ १ ऽ २ ३ २ २
होवा । होवा । ऊवा२इ । ई३या । कविक्रतो२ ।
३ ५र र २ १ १ १ १ १
या२३४औहोवा । ई३या२३४५म् ॥ ३८ ॥ १०

॥ इति त्रयोदशस्यार्द्धः प्रपाठकः ॥

---

* "सुवानोयाति"-इति ७०-व्याख्याने वि० ।

† ऊ० ३,१,१९,१ = ऋ० ६,७,२२,१ = ऊ० १,२,१५,—७,२,८ ;—१५,२,१० ;—१६ ~,११ ;—२०,१,१७=ऊह्य ४,१,६ ।

अथ द्वितीये खण्डे—

सैषा प्रथमा।

१ र २र ३ १ ३ १ २ ३ १ २
प्रसोमासोमदच्युतःश्रवसेनोमघोनाम् *।

३ २ ३ १ २
सुताविदथेअक्रमुः ॥ १ ॥ ११ †

२ ३ ५ २ १ २
ओं ॥ (सौभरे द्वे ॥) प्रसोमा२३४साः। मदच्युतः।

कविर्मेधावी। "कविक्रतुः" अन्तःप्रज्ञः क्रान्तकर्मा वा सोमः "नमगो:" अधिषवणफलकयोः ‡ "हितः" निहितः। "दिवः" द्युलोकस्य "प्रिया" प्रियाणि "वयांसि" वयन्ति गच्छन्तीति वयांसि ग्रावाणः ¶ तानि। [तथाच मन्त्रवर्णः—"श्येना अतिथयः पर्वतानां ककुभः"-इति।] "स्वानैः" अभिषुण्वद्भिरध्वर्य्युभिः सूयमानैः अभिषवसाधनैर्वा ग्रावभिः "परियाति" गच्छति ॥

"स्वानैः"-सुवानैः-इति साम्नृचः पाठः ॥ १० ॥ १०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

* "मघोनः"-इति ऋ०, उ०-व्या० वि० च।

† उ० १,२,२१,१=ऋ०६,८,२२,१=ऋ० १,२,१४ ;—२१,१,२०।

‡ 'द्यावापृथिव्योः अहोरात्रयोर्वा'-इति वि०।

¶ 'वयांसि अन्नानि पक्षिणो वा'-इति वि०। ग्रावाणश्च सोमाभिषवार्थानि पाषाणविशेषाणि "अग्निरुक्थे"-इति ऋचो व्याख्यानं द्रष्टव्यम् (प्र० १०१ पृ०)। निघण्टौ तु ग्रावइति पर्वतइति च मेघनामसु पठ्यते १, १०।

अथ द्वितीया।

१ २ ३२　　३ २ ३ १ २　　३ १ १
प्रसोमासोविपश्चितोपोनयन्तऊर्मयः*।
१ २　　३ १ २
वनानिमहिषाइव ॥ २ ॥ १२ †

१　२ २　१ ३　५　१　०
औ२३होवा३। अवा२सा२३४इना:। ओइमघोना२म्।
१　१ ३　५२ २　२२　३ १ १ १ १
सुता२३:। वा२इ.दा२३४औ होवा। थेअक्रमू२३४५ः ॥१॥११
५ २ २　१　२　१ २　१
प्रसोमासाः। वाइपश्चितः। आपो१नाया२। ता

श्यावाश्वऋषिः‡। "सोमासः"¶ सोमाः "मदच्युतः" मदस्राविणः "सुता" सुतः § अभिषुतः सन्तः "मघोनां" हविष्मतां ‖ "नः" अस्माकं सम्बन्धिनि "विदथे" यज्ञे "श्रवसे" ** अन्नाय कीर्त्तये वा "प्राक्रमुः" प्रगच्छन्ति ॥

"मघानां"—"मघोनः"-इति पाठौ ॥ १ ॥ ११

---

* "अपांनयन्त्यूर्मयः"-इति ऋ० ख, उ०-व्या० वि० च।

† उ० १.२.१९.१= ऋ० ६,८,२३,१= ऊ० ६.२,१२;— ११,२,११ :—१४.१, १२—१३—१४ ;—१८,१,११ ;—१९,२.१५—१६।

‡ "आत्रेयः"-इति ऋषि-नैगेयः।

¶ असुकि रूपम् (७, १, ५०)।

§ सुनादिति चार्ते रूपम् (७, १, ३९)।

‖ मघं धनम्, इह च तत् हवीरूपम् लक्ष्यमिति भावः।

** "विदथः"-इति यज्ञ-नामसु पञ्चमं नैघण्टुकम्।

अथ तृतीया।

१२ ३ १२ ३२ ३१ २ ३ ३ १ २
पवस्वेन्दोवृषासुतःकृधीनोयशसोजने।

३ २ ३ १ १
विश्वाअपद्विषोजहि॥ ३ ॥ १३ *

१ २र २ १ २ १ २ २ १ २र
ऊर्मयः। वाना१निमा२। आऔ३हो। हिषाइव।

१ २ १
इडार३भा३४३। ओर३४५इ ॥ २ ॥ १२

त्रित ऋषिः†। "विपश्चितः" मेधाविनः "सोमासः" सोमाः "प्र नयन्त" पात्राणि प्रति गच्छन्ति। किमिव? "अपऊर्मयः" [अपइति षष्ठी व्यत्ययेन द्वितीया ‡]। [अपामूर्मयः अतएव बह्वृचाः—अपान्नयन्तीति पठन्ति] ते यथा सततमुद्भवन्ति तद्वत्। [बाहुल्येऽयं दृष्टान्तः। अर्थतो गमने दृष्टान्तान्तरमभिधीयते- "वनानि महिषाः" प्रवृद्धा मृगा इव। अथवा स्वाश्रयात् प्रद्रवणे प्रथमो दृष्टान्तः। द्वितीयस्तु दशापवित्रादधःप्रदेशे ॥ २ ॥ १२

---

* उ० २,१,२,१= ऋ० ९,१, २३, ३।

† "आप्त्यः"-इति ऋषि-निर्णयः।

‡ 'व्यत्ययो बहुलम्"-( पै० ३, १, ८ ) व्याख्यातश्चैवं पुरस्तात् ( प्र०१,१५पृ०—) मृगेषु यो महान् मृगः तस्य तु नामौ महिष इति प्रसिद्धम्। तथाहि—

"ब्रह्मा देवानाम्पदवीः कवीनामृषिर्विप्राणां महिषोमृगाणाम्"

—इति ऋग्वेदीया श्रुतिः ( ९, ५, ११, ६ )। "महिषो मृगाणामित्येषम् हि महा भवति मृगाणाम्"-इत्यादि तद्व्याख्यानं यास्कस्य।

अथ चतुर्थी।

१ ३ १ २ ३ १ २ ३ १ २
वृषाह्यसिभानुनाद्युमन्तन्त्वाहवामहे।
१ २ १ ३ १ २
पवमानस्वर्दृशम्* ॥ ४ ॥ १४†

४ २ २ ४ १ १२
(वृषकाणि त्रीणि॥) पवस्वेदो५वृषासुतः। कृधी
२ २ १ २ ३ ५ १ १
नोयशसोजनाये३। वाइश्वाआ२३४पा। द्वा२इषा२३४
५२ २ १ ५
औहोवा। जा२३४हो॥ ३ ॥ १३

४ ५२ ४ १ १२ २ १ २ २
वृषाह्यिया। सिभानू२३ना। द्युमन्तंत्वाहावा१माहा
३ २ १ २ १ ५ ३ ५
२३४इ। पवा३। मानसुवे२३४वा। दृ२३४शाम्॥ ४ ॥

अमहीयुर्ऋषिः‡। हे "इन्दो" सोम! "सुतः" अभिषुतः "वृषा" सेक्ता त्वं "पवस्व" धारया क्षर। "जने" जनपदेषु "नः" अस्मान् "यशसः" यशस्विनः "कृधि"¶ कुरु। "विश्वा" सर्वान् "द्विषः" द्वेष्टृन् शत्रून् "अप जहि" मारय॥ ३ ॥ १३

---

* "पवमानस्वाध्यः"-इति ऋ०।

† छ० ३,१,४,१= ऋ० ७,१.१,४।

‡ "आङ्गिरसः"-इति ऋपि नैगेयः।

¶ 'शुशृणुपृकृवृभ्यश्छन्दसि (६, ४, १०२)"-इति सिद्धं कृधीति। ऋपि तु "कृधी"-इति दीर्घान्तपाठः, स च "द्व्यचः (६, ३, १३५)"-इति योगविभागात् साध्यः।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ २ ३ १
इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिः *।

४ र २ ४ २ १ २र १ २र र
वृषाह्यियापुसिभानुना। द्युमन्तंत्वाहवारमहे।

२ १ २र १ २
हा२इ। ऊ२। हो३वा। पवमानसुवर्हृशम्। हा-
२इ ऊ२। हो३वा। ऊवो३४५इ। डा॥ ५॥१४

भृगुर्ऋषिः †॥ हे "सोम!" त्वं "वृषा" अभिलषितफलानां वर्षिता "असि हि" भवसि खलु। तस्मात् हे "पवमान" पूयमान पुनानः‡ वा सोम! "स्वर्दृशं" सर्वस्य द्रष्टारं¶ "भानुना" तेजसा§ "द्युमन्तं" दीप्तिमन्तम् अतिशयेन तेजस्विनमित्यर्थः। स्तुतिमन्तं वा "त्वा" त्वां "हवामहे"॥ यज्ञेषु आह्वयामहे॥ ४॥१४

* "मती"-इति ऋ०।

† "वारुणिः भार्गवोजमदग्निर्वा" इति ऋषि-नैगेयः।

‡ अभिषुत शोधित इत्यर्थः।

¶ प्र०४८० पृ० द्र०।

§ भानुइति निघण्टावह्नर्नामसु (१, ९) दृश्यते परमिह सर्वत्र रश्मिवाचकत्वेन व्याख्यातमाचार्येण—(प्र० २१९ पृ०, ४५८ पृ०)।

‖ ह्वः सम्प्रसारण-माकृत्येन रूपमिदम् (६, १, ३४)।

३ १२२२३ १ २
स्वजदश्वᳪ रथीरिव ॥५॥ १५ *

२ २ ३२४ ५ ४ ५
(कौम्भ्यस्य सामानि त्रीणि ॥) इन्द्रौहोवाहाइ । पावी ।
२१ ३ ५ २२ १ ऽ २ १
ष्ठचा२इ । तनो२३४हा । हाहोइ । हो३हा । प्रियाः-
२२ २२ २३ ५ २२ १ ऽ २
कवी । नाम्न । तिरो२३४हा । हाहोइ । हो३हा ।
१ ३ ५ १२ २ ऽ २ १
स्वजा२त् । अश्वो२३४हा । हाहोइ । हो३हा३ । रा२
३ ५२२ ३ ५
या२३४ औहोवा । ई२३४वा ॥ ६ ॥

४ ५ ४२ ५ ४ ५ ४ ऽ २ ३
इन्दुःपविष्ठचेतनःप्रियःकवाइ । ऊ३म् ऊम् । नाम्ना-
५ १ २ ऽ २ १ ३
२३४तोः । स्वजादा२३श्वाम् । ऊ३म् ऊ३म् । रा२था-
५२२ ३ ५
२३४औहोवा । ई२३४वा ॥ ७ ॥

४ ५ ४२ ५ ४ ५ ४ ४२ ५ ४ ५ ४ ४
इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिःस्व । जा५दश्वाम् ।
१ १ १ ३ ५२ २ ३
ओवा२३ । ओवा२३ । रा२ या२३४ अ होवा । ई २ ३ ४
५
वा ॥ ८ ॥ १५

---

* ऋ० ७,१,२३,५ ।

अथ षष्ठी।

१ २ ३ २ ३ १ २ ३ १र २र ३ २
असृक्षतप्रवाजिनोगव्यासोमासोअश्वया।
३ १ २ ३ १र ३र
शुक्रासोवीरयाशवः ॥ ६ ॥ १६ *

५ २ ४ ५४र ५ १
(कार्त्तवेशस्य त्रीणि ॥) असृक्षा३ताप्रवाजिनाः। गा-
१ र १ २ १
व्या२सोमा२। सोअश्वयाशु१क्रा२सोवी२। रया२-
१२ १
शवः। ओ२३४५इ। डा ॥ ८ ॥

५ र ५र २ १र र र र
असृक्षताप्रा६वाजिनाः। गव्यासोमासोअश्वया२३-

अस्या उत्तरस्याश्च कश्यपऋषिः†। "चेतनः" प्रज्ञापकः "प्रियः" देवानां प्रीतिकरः "इन्दुः" सोमः "कवीनां" क्रान्तकर्मणां स्तोतृणां‡ "मतिः"¶ मत्या स्तुत्या "पविष्ट"§ पवते। "अश्वं" हयं "रथीरिव" रथीव ऊर्मिं॥ "सृजत" सृजति ॥ ५ ॥ १५

* उ० ४,१,२,१=ऋ० ७,१,३६,४।

† "मारीचः"-इति ऋषि-नैगेयः।

‡ प्र०९२८ पृ० द्र०।

¶ स्वादेशे रूपम् (७,१,३९)।

§ लेटः सिप्पक्षे रूपम् (३, ४, ९४)।

॥ "पङ्क्तीकृतानामश्वानां समनोन्नमताकृतिः। अतिवेगसमायुक्ता गतिरूर्मिरुदाहृता"-इत्यश्वचिन्तामणिः।

अथ सप्तमी।

१ २ ३ १ २ ३ १र २र ३ १ २
पवस्व देववायुषगिन्द्रङ्गच्छतु ते मदः।
३ १र २र ३ १ २
वायुमारोह धर्मणा॥ ७॥ १७†

१ २ १र र २ २ १ १ २ ५र
हाइ। प्रउक्रासोवा३१इ। रया२३। शा२वा२३४औ-
र ३ ५
होवा। ग्वा२३४भी॥ १०॥

३ ४ ३ ४र ५ २ ४ ५र २
आसृक्षतप्रवाजिनाः। ए३। गव्यासोमा। सो३
१ २ २ १ ३ ५ २ १ ५ ४
आश्वा३या। प्रउक्रा२सो२३४वी। रयो२३४वा। शा५-
५
वो६हाइ॥ ११॥ १८

"वाजिनः" बलवन्तः‡ "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्या" गवेच्छया¶ "अश्वया" अश्वेच्छया§ "वीरया" वीरेच्छया च॥ "प्रासृक्षत" ऋत्विग्भिः प्रकर्षेण सृज्यन्ते॥ ६॥ १६

---

* "देवायु॰"-इति ऋ॰, उ॰-व्या॰ वि॰ च।

† उ॰ ५,१,१५,१ = ऋ॰ ७,१,३४,२ = क॰ ४,२,१७—१८—१९—२० ;—१७,१, १ = ऊह्य १,२,२।

‡ 'अश्ववन्तः'-इति वि॰।

¶ प्र॰२२३ पृ॰ द्र॰।

§ ४ प्र॰ ४११ पृ॰ द्र॰।

‖ अश्वयेतिवत् साध्यः।

अथाष्टमी।

१ २ ३ २ ३ १र २र ३ १

पवमानोअजीजनद्दिवश्चित्रन्नतन्यतुम्।

४ ५ ४ ५ ३ २ १ २

(आम्मदे द्वे॥) पावस्वदि। वया३। वा२या२३४

५र र ३ ५ ४ ५ ४ ५ २ १

औहोवा। यू२३४षाक्। आइन्द्रं गच्छा। तुता३इ।

१ ३ ५र र ३ ५ २र

तू२ता२३४औहोवा। मा२३४दाः। वायू२५६हो१इ।

१ २ १ २ १ २ ५र र २

आ२३रा। हधा३। हा२धा२३४औहोवा। मा२-

५

३४णा॥ १२॥

३४५र र २ ३ ५ १र १

पवस्वदेवए। चीऐहो२३४या। आयुषागे२हीए

५ २ १ र १ ५ २ १

२हो३या। इन्द्रं गच्छतुतेमदए२हीए२हो३या। वायुमा-

२ २ १ ५ ४ ५

रो३१२३। हधा२३४वा। मा५णोईहाइ॥ १३॥ १७

निध्रुविः काश्यपऋषिः। हे सोम! "देवः" द्योतमानस्त्वं "पवस्व" धारया चर। अपिच तव "मदः" मदकरोरसः "आयुषक्" अनुषक्तः* यथा भवति तथा इन्द्रं प्रति गच्छतु। अपिच

* सचते रूपम्। आनुषक् आयुषक् इति शाखाभेदेन पठ्यते "आनुषगिति नामानुपूर्वस्यानुषक्तोभवति"-इति वि०।

१ २ ३ २ ३ १
ज्योतिर्वैश्वानरम्बृहत् ॥ ८ ॥ १८*

४ ५ १र २ १ २ ५
(जनित्रे द्वे ॥) पावा। मानो। अजीजा२३४नात्।
२ १ ० र १ १ ३
दिवश्चित्राम्। नतन्यतूम्। ज्योतिर्वैश्वा२३। ना२रा
५र र ३ ५
२३४औहोवा। बृ२३४हात्॥ १४॥

५ र १ २ २ १ २ १
पवमानाः। अजाइजा३नात्। दिवश्चित्रा२३९
२ १ २ ३ ५ ३ ५ ३
त्राइ। नातन्या२३४तूम्। ज्यो२३४ती। वा२३४इ
५ ४ ५ ४ ५
श्वा। नरोवा। बृ५होई त्राइ॥ १५ ॥ १८

त्वं "वायु" "धर्मणा" धारकेण† रसेन‡ "आरोह" प्राप्नुहि॥
"देवआयुषक्"-"देवायुषग्"-इतिपाठौ॥ ७॥ १७

---

* उ० ३,१,२,१ = ऋ० ७,१,२१,१ = क० १२,१,१२ ;—१८,१,८—९।

† 'धर्मणा कर्मणा'-इति वि०।

‡ धर्मणेति विविधं व्याख्यातम्। तथाहि—"जातः परेण (प्र०२४८ पृ०)"-इत्यत्र 'धर्मणा आधानादि-कर्मणा'-इति, "घृतवती (प्र० ७७७ पृ०)-इत्यत्र 'धर्मणा धारणेन'-इति इह 'धर्मणा धारकेण रसेन'-इति; एवमुत्तरत्रापि (ऋ० ६; १, २,८—उ० २, २, ९, २—३, १, १, ३—३, १, १०, ३—३, ९, २०, ३—४, २, १, ७—७, १, ७, २) स्वयमु द्रष्टव्यम्।

अथ नवमी।

१ २ ३ २ ३ १ २ ३ १ २ ३१ २ ३ २
परि स्वानास*इन्दवोमदायबर्हणागिरा।
१ ० ३ १ २
मधोअर्षन्ति†धारया॥९॥१९‡

४ ५ २र र र र
(प्रक्रीडम्॥) पारो। स्वानास। इन्दवोमदायब।
१ २ ३ २ १ २ १ ५ ४
र्हणा२३गिरा३४। मधो३४अर्षा३। तिधो२३४वा। रा
५
५योई२हाइ॥१६॥

४ ५ २र १र १
(सङ्क्रीडम्॥) पारो। स्वानासइन्दवाओवा२३हो

अमहीयुर्ऋषिः¶। "पवमानः" सोमः "बृहत्" महत् "वैश्वानरं" वैश्वानराख्यं § "ज्योतिः" तेजः "दिवः" द्युलोकस्य "चित्रं" विचित्रं "तन्यतुं न" अशनिमिव॥ "अजीजनत्" अजनयत्॥८॥१८

---

* "सुवानास"-इति.
† "सुताअर्षन्ति"-इति च } ऋ०, उ०-व्या० वि० च।
‡ उ० ४,२,१,७ = ऋ० ९,७,२४,४।
¶ "आङ्गिरसः"-इति ऋषि-नै०।
§ नि० दै० १, २१—२३ खण्डा द्रष्टव्याः।
|| 'तन्यतुं विस्तीर्णम्'-इति वि०। "तमोतन्वंतुष् तन्यतुर्वायुः राशिः (उ०४, २)'-इति सि० कौ०।

अथ दशमी ।

२ ३ १ २　३ १र　२र ३ १र　२र ३ २
परिप्रासिष्यदत्कवि.सिन्धोरूर्मावधिश्रितः ।

वार३हा२ई या । मदायवर्हणागिरा । ओवा२३होवा २३हा२ई या । मधोअर्षन्तिधारयाओवा२३होवार३हा २ईया२ । वार३४औहोवा । ऊ२३४पा ॥ १७ ॥

(निक्रीडम् ॥) पा५पुरी । स्वाना३सा३इन्दवाः । मदा२यवर्हणा२गिरा । मधो२३अर्षा । ऊर्मिरिवा२ । ई३या । तिधारया । औ३होवा । हो५इ । डा ॥ १८ ॥ ॥ १९ ॥

हयोः काश्यपोऽसितऋषिः* । "स्वानासः" सुवानाः अभि-षूयमाणाः "इन्दवः" दीप्ताः । "वर्हणा" महत्या† "गिरा" स्तुतिरूपया वाचा "मधो" इति विभक्तिव्यत्ययः(३,१,८५) । मधवो मदकराः सोमाः "धारया" सह देवानां "मदाय" तदर्थं "पर्यर्षन्ति"‡ दशापवित्रादधः चरन्तीत्यर्थः ॥

"मधो"—"सुता" इति साम्नऋचः पाठौ ॥ ८ ॥ १९

* "देवलो वा"-इति ऋषि-नैगेयः ।

† 'वर्हणा परिवेढ्रनेनेति वि० ।

‡ 'ऋषगतौ (तु० प०)'-इत्यस्य रूपम् । अर्षति, अरर्षति-इति च गतिकर्मसु नि० २, १४ ।

२ १र २र ३ १ २
कारु*म्बिभ्रत्पुरुस्पृहम् ॥ १० ॥ २०†

॥ इति पञ्चम-दशति ॥

॥ इति पञ्चमः प्रपाठकः ॥

५ र २ १ १ र
(औशनम् ॥) परिप्रासि। ष्यदत्कावी२ः। सिन्धो

२र ७ १र १ २ ५र र
रूर्मावाधिश्रिता२ः। कारु२३म्। बा२इभ्रा२३४औहो

२ १ ३ १ १ १ १
वा। पुरुस्पृहा२३४५म् ॥ १८ ॥ २०

"परि प्रासिष्यदत्" परिस्यन्दते "कविः" मेधावी "सिन्धोरूर्मावधिश्रितः" आश्रितः सन् "पुरुस्पृहं" बहुभिः स्पृहणीयं "कारु" स्तोतारं‡ "बिभ्रत्" धारयन् सोमः परिस्यन्तते-इति सम्बन्धः ॥

"कारु"—"कारम्"-इति पाठो ॥ १० ॥ २०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य द्वितीयः खण्डः ॥ १ ॥

---

* "कारं"-इति ऋ०।

† ऋ० ६,८,३,१।

‡ "कारुः"-इति स्तोतृनामसु तृतीयं नैघण्टुकम् (३, १६)।

अथ तृतीये खण्डे—

सैषा प्रथमा ।

२ ३ २ ३ २ ३ १ ३ १ २ ३ १ २ ३ २
उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम्।
१ २ ३ १ २
इन्दन्देवाअयासिषुः ॥ १ ॥ २१ *

२ १ २ २
(यामानि त्रीणि ॥) इहा२इहा। उपोषुजातमा२
१ २ १ २
प्तुराम्। इहा। इहा२इहा। गोभिर्भङ्गम्परा२इष्कृ
१ २ १ २ २ १
ताम्। इहा। इहा२इहा। इन्दुन्देवाअया२सिषुः।
२
इहा१ ॥ २० ॥

१ २ २ १ २ १
ऊपोषुजातमा२प्तुराम्। उपा। गोभा२३इहोइ।
१ १ २ १ २
भङ्गम्परा२इष्कृताम्। उपा। इन्दु२३४होइ। देवा
१ २ २
अया२। सिषुरा३१ओवा२३। ऊ२३४पा ॥ २१ ॥

४ ५ २ ४ २ ५ १ २ ३ ५ २
उपोषौ। होइजाताम्। आप्तू३राम्। औ३हो३
२ १ २ ३ ५ १ ७ १
वा३। गोभिर्भा२३४ङ्गाम्। ओइपारिष्कृता२म्। इन्दू-
२ २ ५ २ २ २ २ ३ १ १ १ १
२३म्। देवा३४औहोवा। अयासिषू२३४५ः ॥ २२ ॥ २१

* ऋ० १,२,१८,२—५,१,२०,१ = ऋ० ७,१,२०,१ = क० ६,१,५ ;—१८,२,११ ।

अथ द्वितीया।

२ १ २ ३ ३उ ३ २ ३ १२
पुनानोअक्रमीदभिविश्वामृधोविचर्षणिः।
३ २ ३ १ २ ३ १२
शुम्भन्तिविप्रन्धीतिभिः॥ २ ॥ २२ *

५ र र २ ३ ५ १
(वैरूपम् ॥) पुनानोआ। क्रामीदा२३४भी। वि-
३ ५ २ ३ ५ १ ३ ५
श्वा२मा२३४र्द्धाः। वीचर्षा२३४णीः। शुभा२ता२३४इवी।
१ ३ ५र र ३ ५
प्रा२धा२३४औ होवा। तीर२३४भीः॥ २३ ॥ २२

अमहीयुर्ऋषिः†। "सुजातं" सम्यक् प्रादुर्भूतम् "अप्सु" वसतीवरीभिः प्रेरितं‡ "भङ्ग" शत्रूणाम्भञ्जकं¶ "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् संस्कृतम्। "इन्दुं" सोमं "देवाः" इन्द्रादयः उपायासिषुः "उपगच्छन्ति॥ १ ॥ २१

§"विचर्षणिः" द्रष्टा॥ "पुनानः" सोमः "विश्वाः" सर्वाः

---

* उ० ३,१,१२,१ = ऋ० ६,८,२०,१ = ऊ० ९,९,१२;—२३,२,११—१२—१३।

† "आङ्गिरसः"-इति ऋषि-नैगेयः।

‡ 'अप्सु भवतीति अप्सुरम्'-इति वि०।

¶ 'भङ्गं भज्यते ग्रावभिः'-इति वि०।

§ नेह सायणीयर्षिसंवादो दृश्यते, तदिह च मूलं लेखकप्रमादमित्यनुमीयते, "बृहस्पतिः आङ्गिरसः"-इति तु ऋषि नै०।

|| "विचर्षणिः"-इति पश्यतिकर्मसु षष्ठं नैघण्टुकम् (३, ११)। 'विचर्षणिः विविधं पश्यन्ति सर्वं वा पश्यन्ति'-इति वि०।

अथ तृतीया ।

२ २ ३ १ २ ३ २उ ३ १ २ ३ १र २र
आविशन्कलशꣳसुतोविश्वाअर्षन्नभिश्रियः* ।
३ १ २
इन्दुरिन्द्रायधीयते† ॥ ३ ॥ २३‡

(औशने द्वे ॥) ५र र ५ आविशन्कालाईशꣳसुताः । वाइ-
२र १ २ १ २ ऽ २ १ २ २
श्वाअर्षन् । अभाइश्रायाइः । ओ२हा२ । ओवा । ओ
३ १ १ १ ३ ५र र २र
२३४हाइ । इन्दु२३ः । आ२इन्द्रा२३४औहोवा । यधी
३ १ १ १ १
यते२३४५ ॥ २४ ॥

"मृधः"¶ शत्रुसेनाः "अभ्यक्रमीत्" अभिक्रामति§ । "विप्रं" मेधाविनं तं‖ सोमं "धीतिभिः"** शुचिभिर्वा "शुम्भन्ति"†† अलं कुर्वन्ति ॥ २ ॥ २२

---

* "सुतः,"-इति, † "शूरोनगोषुतिष्ठति"-इति च ऋ० ।

‡ ऋ० ७, १, १७, ४ ।

¶ "मृधः"-इति सङ्ग्राम-नामसु विंशं नैघण्टुकम् । 'मृधः—सङ्ग्रामान् जेतुम्'-इति च वि० ।

§ सार्वकालिकोलुङ् (३, ४, ६) ।

‖ "विप्रः"-इति मेधाविनामसु प्रथमं नैघण्टुकम् (३, १५) ।

** "धीतयः"-इति अङ्गुलिनामसु सप्तमं नैघण्टुकम् (२, ५) । 'धीतिभिः-कर्मभिर्बुद्धिभिर्वा'-इति वि० । वस्तुतोधीतिशब्दो बह्वर्थः ।

†† 'शुभ शोभायाम् (भ्वा०प०)'-इत्यस्य रूपम् । 'शुम्भन्ति शोभन्ते अलङ्कुर्वन्ति' -इति च वि० ।

अथ चतुर्थी।

१२३ २ ३ १ २ ३ १ २ ३क २र ३ २
असर्जिरथ्योयथा*पवित्रे चम्वोःसुतः।
१२ ३ १ २
कार्ष्मन्वाजीन्यक्रमीत्॥ ४॥ २४†

४र ३ ४ ५ ३ २ ४ ५ १ २
आविशन्कलशम्। सुताइः। वाइश्वाः। अर्षन्।
१ २ ३र र ५ १ २र
अभाइश्रायां। औहोहोर३४वा। औहोहो१इ। इ-
२ १र १ ५र र २
न्दूरा१इन्द्रा२। य। धीयार्२ता२३४औहोवा। ऊ-
५
२३४पा॥ २५॥ २३

‡"सुतः" अभिषुतः "सोमः" "कलशं" द्रोणम् "आ विशन्" "विश्वाः" सर्वाः "श्रियः" सम्पदः "अभ्यर्षन्"¶ अभितो गमयन् "इन्दुः" दीप्तः सोमः§ "इन्द्राय" इन्द्रार्थं "धीयते" दशापवित्रे अध्वर्युभिर्निधीयते‖॥ ३॥ २३

* "यथा"-इति ऋ०।

† ऋ० ६, ८, २९, १।

‡ इहापि सायणीयर्षिसंवादोनास्ति। 'असितः काश्यपः'-इति ऋषि-निर्णयः।

¶ "अर्षति"-इति गतिकर्मसु पठ्यते, तस्यैव रूपमिदम् (नै० २, १४)।

§ योगार्थो दीप्तः स इह विशेषणम्. रूढार्थः सोमः स एव विशेष्यं पदम्।

‖ "अभिस्पृहः"-इत्येव विवरण-सम्मतः पाठ, अतएवोक्तम्,—'अर्षन् ऋरति, अभिस्पृहः स्पृहणीयाः'-इति॥

अथ पञ्चमी।

२उ  ३ १  २१  ३ २ ३ २ ३ १ २
प्रयद्गावो*नभूर्णयस्त्वेषाअयासोअक्रमुः† ।
१ २  ३ २उ  ३ २ २
घ्नन्तःकृष्णामपत्वचम्॥ ५ ॥ २५ †

(सोमसाम ॥) असर्जिरा। थि। योयार२३था। पविन्ने। चा। मुवोर:स्व२३४ताः। काय्म्न्वार२३जी। नियक्रमाइत्। ओर२३होवा। होप्५इ। डा॥ २६ ॥ २४

प्रभूवसुर्ऋषिः‡ । "रथ्योयथा" रथसम्बन्धी अश्व इव स यथा विसृज्यते यज्ञे तद्वत् "चम्वोः" अधिषवण-फलकयोः "सुतः" अभिषुतः सोम "असर्जि" "पवित्रे" सृष्टोऽभूत्। तथाभूतो "वाजी" वेगवान् ¶ सोमः "कार्ष्मन्" § कार्ष्मणि युद्धे इतरेतराकर्षणात्। अत्र देवानामाकर्षणवति यज्ञाख्ये सङ्ग्रामे "न्यक्रमीत्" नितरां क्रामति ॥ ४ ॥ २४

---

* "प्रमेगावी" इति ऋ०।

† उ० ३, १, २, १ = ऋ० ६, ८, ३१, १।

‡ "आङ्गिरसः"-इति ऋषि-नैगेयः।

¶ 'वाजी बलवान्'-इति वि०।

§ "कार्ष्मन्"-इति सुब्लुकि रूपम् (७, १, ३९)। युद्धार्थे प्रवृत्तिनिमित्त माह—'इतरेतराकर्षणादिति। यज्ञयाचिलेऽपि तदेव प्रवृत्ति निमित्तमिति दर्शयन् दृष्टान्तविधिं सङ्क्रमयति अत्रे त्यादिना।

४ ५ २र र १ २
( काण्वं द ॥ ) प्रयद्गाउ । गावोनाइभूर्णा१या२३४ः ।
३र २ १ ऽर र १ २
त्वेषाइः । आयार२सोअक्रमुः । घ्नन्ताःका२३ष्णा२ म् । अ
१ २ र १ २ ५र र २ ५
पात्वचम् । औहोर२हा२३४औहोवा । ऊ२३४पा ॥ २७ ॥
२ १ २ ४र ५र १ र २ र १ ०
प्रयद्गा२वोनभूर्णयाः । त्वाइषाअया । सोअक्रमू२३ः ।
१ र ५ १ ० ५र र १ २ १ २ १ १ १
घ्ना२३४न्तोहाइ । का२ष्णा२३४औहोवा । अपत्वचा२३४
५म् ॥ २८ ॥ २५

मेध्यातिथिर्ऋषिः*। "यत्" ये "भूर्णयः†" क्षिप्राः "त्विषाः" दीप्ताः‡ "अयासः" अयाः गमनकुशलाः "कृष्णां"¶ "त्वम्" "अप घ्नन्तः" अभिषवेण निरस्यन्तः [ त्वचिः, सम्बरणकर्मा § (तु० प०) । इन्दुभूताः सोमाः "प्राक्रमुः" यज्ञं प्रवर्त्तयन्ति । तत्र दृष्टान्तः—"गावोन" उदकानीव ॥ तानि यथा क्षिप्रमधः पतन्ति तद्वत् । गावएव वा उपमीयन्ते तायथा स्वगोष्ठमाशु

* "काण्वः"-इति ऋषि० नै० ।

† 'भूर्णयः भरणशीलाः'-इति वि० । भूर्णयः-भ्रमणशीलाः, भरणशीलाश्चान्यत्र (ऋ० ६।१०५० ट० ) ;

‡ 'त्विषदीप्तौ ( भ्वा० उभ० )'-इत्यस्य रूपम् । 'दीप्ताः-महान्तः'-इति वि० ।

¶ कृष्णां रात्रिं कृष्णारूपाम्, अपत्वचं अपनयं रात्रेः कृष्णांच'-इति वि० ।

§ सम्बरणमाच्छादनम् ।

|| गोशब्दो बह्वर्थः परमुदकार्थो न नैघण्टुकः ।

अथ षष्ठी ।

२ १ २ ३ १ २ २ १ २ ३ २
अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः ।
३ १र २र ३ १ २
नुदस्वादेवयुं जनम् ॥ ६ ॥ २६ *

५ ४र ५ १ २
(वैश्वदेवम् ॥) अपघ्नौ । होइपावा । साइमा१र्द्धा
१ २ र १ २ १ १
२ः । क्रातुवित्सो । ममात्सा१रा २ः । नुदा२३ । स्वा-
३ ५र र २ १ १ १ १ १
२दा२३४औहोवा । वयुंजना२३४५म् ॥ २८ ॥ २६

गच्छन्ति†" तद्वत । अथवा गावः स्तुतिवाचः‡ ता यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति, तद्वत् यज्ञं प्रवर्त्तयन्ति¶ तान् स्तुवे—इति शेषः ॥

"यत्"—"ये" इति साम्नऋचः पाठौ ॥ ५ ॥ २५

अस्याः परस्याश्च निध्रुविर्ऋषिः§ । हे "सोम !" "मत्सरः" मदकरः ॥ यः त्वं "मृधः" हिंसकान् शत्रून्** "अप घ्नन्" मारयन्

* उ० ५. १, १५. २ = ऋ० ७. १. ३.४, ४ = ऊहे ४. २. १७ — १८ — १९ — २० ;—१७, १, १ ;—ऊह्ये १, २, २ ।

† षडष्टौ गाव उषसां वाहनभूताः ( १, १५ नै० ) ।

‡ निघण्टु-प्रथमैकादशं द्रष्टव्यम् ।

¶ 'गावः रश्मयः'-इति वि० । 'गावः'-इति रश्मिनामसु तृतीयं नैघण्टुकम् (१,५) ।

§ "काश्यपः"-इति ऋषि-नैगेयः ।

|| 'मदनीयोभक्षणीयश्च'-इति वि० ।

** 'मृधः सङ्ग्रामान् पाप्मनश्च'-इति वि० ।

अथ सप्तमी।

१ २ ३ १ २१ २३ २३ १ २
अयापवस्वधारयाययासूर्यमरोचयः।
३ १२ २२ ३ २
हिन्वानोमानुषीरपः॥ ७॥ २७*

५र र २ १
(वैश्वदेवꣳसूर्य्यसाम॥) एअयापवा। स्वधा२। र
२ १ ५ १ २ २ १ २
या३१उवा२३। ऊ३४पा। ययासूर्यमरो२। चया३१
२ ५ १ २ २ २ १
ओवा२३। ऊ३४पा। हिन्वानोमानुषा२२इहोइ। आ-
१ २ ५
पआ३१उवा२३। ऊ२३४पा॥ ३०॥ २७

"क्रतुवित्" अस्मभ्यं प्रज्ञां प्रयच्छन्† "पवसे" चरसि स त्वं "अदेवयुं" अदेवकामं जनं‡ राक्षसवर्गं "नुदस्व" प्रेरय॥ ६॥ २६

हे सोम! "मानुषीः" मनुष्याणां हितानि¶ "अपः" उदकानि "हिन्वानः" प्रेरयन्§ त्वं "यया" धारया "सूर्य्यम्"

---

* उ० ५, १. ८, १=ऋ० ७, ३१, १।

† 'क्रतुवित् कर्मवित्'-इति वि०।

‡ यो देवान् यष्टुं न कामयते इत्यर्थः।

¶ 'मनुष्याणां भवाः'-इति वि०।

§ हिन्वान इति 'हिवि प्रीणने (स्वा० प०)'-इत्यस्य रूपम्। 'हिन्वानः सेवमान -इति वि०।

अथाष्टमी।

१ २ ३ २उ ३ १ २ ३ २ ३ १ २
सपवस्वय आविथेन्द्रं वृत्राय हन्तवे।
१ १ २ ३ २ ३ २
ववृवांꣳस*मह्रीरपः॥ ८॥ २८†

२ १ १ ३ ५ १
(वार्चघ्नम्॥) सहो३४३इ। पवस्व। यआ२
१ २१ १ १ २ ३ ५ १ २ ४ ५
विथा। इन्द्रं वृत्रा३। याहन्ता२३४वे। ओवा३ओवा।
२ १ २ १ २र १ २ ४ ५ ४
वव्रिवा२३ꣳसाम्। माह्नीरपा। औ३होवा। हो५इ।
डा॥ ३१॥ २८

"रोचयः" प्रकाशयः। तथा "अया" अनया धारया "पवस्व" चर॥ ७॥ २७

अमहीयुर्ऋषिः‡। हे सोम! यस्त्वं "मही:" महती: "अपः" महान्त्युदकानि "वव्रिवांसं" निरुन्धानं¶ "वृत्राय" वृत्रं§ "हन्तवे"‖ हन्तुं "इन्द्रम्" "आविथ" अरक्षः** 'स' त्वं "पवस्व" धारया चर। सोमं पीत्वा मत्तः सन्निन्द्रो महान्त्युदकानि निरुन्धानं वृत्रं जघानेत्यर्थः॥ ८॥ २८

* "वव्रिवांसं"-इति सर्वव्याख्यातृ-सम्मतः पाठोगानग्रन्थसम्मतश्च।

† ऋ० ७, १, २२, २।

‡ "आङ्गिरसः"-इति ऋषि-नैगेयः।

¶ 'वव्रिवांसं वरणस्वभावम्'-इति वि०।

§ 'वृत्राय मेघाय' इति वि०।

‖ "तुमर्थे सेसेन् (३, ४, ९)"-इत्यादिना सिद्धम्।

** 'आविथ अवेस्तर्पणार्थस्य, तर्पयसि'-इति वि०।

अथ नवमी।

३ २ ३ १र २र ३ १ २ ३ २ ३ १
अयावीतीपरिस्रवयस्तइन्द्रोमदेष्वा।
३ १ २ ३१ २र
अवाहन्नवतीर्नव॥ ९॥ २९*

५ र र २र १
(सोमसामानि त्रीणि॥) अयावीती। पारिस्रवा।
२ १ २र १ १ २ २ २१
यस्तइन्दाउ। मादाइषुवा। अवाहाइन्नाइ। वतो२३
५ ४ ५
४वा। नाप्वोइहाइ॥ २२॥

२ १र र २ २र १ २ २र २ २र र
अयावीता। औहोवा। औहो३४इ। औ। होर।
३ ५र र १ २ १ १ २र १
वार३४। औहोवा। परिस्रव। यस्तइन्दा। औहो
२ ३र २र १ २ ५र र
वा। औहो३४इ। औ। होर। वा२३४। औहोवा।
१ ऽर १र र २ ३र १ २ ३र २
मदे२षुवा। अवाहन्ना। औहोवा। औहो३४इ।
२र १ ३ ५र र २१र १ १ १ १
औ। होर। वार३४। औहोवा। वतीर्नवार३४५॥ २३॥

४ ३ र ४ २ ४ ५ १ २ र १
अयाऽ५वी। ताइइपाइरिस्रवा। यास्तइन्दो। मदा

---

* उ० ५, १, ६, १ = ऋ० ६, ७, १९, १।

अथ दशमी ।

१ २ ३ १र　२र ३२उ ३१ २ ३ १ २
परिद्युक्षꣳसनद्रयिम्भरद्वाजंनोअन्धसा ।

२　१ २ २　३ र २ १　२ ४ ५
इषू२वा२ । अवाहा३न्ना । वतोर्नवा । औ२होवा ।

४
हो५इ । डा ॥ ३४ ॥ २९

अमहीयुर्ऋषिः* । हे "इन्दो" सोम ! "अया" अनेन रसेन "वीती"† वीत्यै इन्द्रस्य भक्षणाय‡ "परिस्रव" परिक्षर । कीदृशेन रसेनेत्यत आह "ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु¶ "नवतीर्नव" नवनवति-सङ्ख्याकाः§ शम्बरपुरीः‖ "अवाहन्" जघान (अमुं सोमरसं पीत्वा मत्तः सन्निन्द्रः उक्तसङ्ख्याकान् शम्बरपुरीर्जघानेति मत्वा रसो जघानेत्युपचारः ॥ ८ ॥ २९

---

* "आङ्गिरसः"-इति ऋषि-नैगेयः ।

† पा० १, २, ९६ । ७, १, ३९ ।

‡ "वीतिः कान्तिः, मार्गो वा तेन परि स्रव परितस्समन्तात् स्रव'-इति वि० । इह मये कान्तिकर्मणोवेतेरिदं ( नै० २, ६, ३ ) रूपमिदम् ।

¶ 'मदेषु पुरतोव्यवस्थितेषु'-इति वि० ।

§ षट्‌शतानि दशोत्तराणि ।

‖ शम्बर इति निघण्टौ मेघनामसु ( १, १० )—उदकनामसु ( १, १२ ) बलनामसु ( २, ९ ) च दृश्यते । ऐतिहासिकस्तु शम्बरनाम दैत्यविशेषः, तद्वधोपाख्यानं भागवतादौ ( १०, ५५ ) द्रष्टव्यम् ।

३ १ २ ३ २ ३ २

स्वानोअर्षपवित्रआ ॥ १० ॥ ३० *

॥ इति प्रथम-दशति ॥

५ १

(भारद्वाजम् ॥) परिद्युचाम् । औहृ । सनद्रायो

१ र ३र

२म् । भरद्वाजा२म् । औहृ । नोअन्धासा२३४ । स्वा

२ ३ १ ४ ५ ४ ५

ना३४अर्षा३ । पवोवा । चा५यो६हाइ ॥ ३५ ॥ ३०

॥ इति ग्रामे गेये त्रयोदशः-प्रपाठकः ॥

उवथ्यऋषिः† । "द्युक्ष" दीप्तं‡ "सनत्" दीयमानं¶ सैन्यं वा "रयिम्" धनं यस्य तादृशं "वाजं" बलं "अन्धसा"§ अन्नेन सह सोमः "नः" अस्माकं॥ "परिभरत्" परतोहरतु प्रयच्छत्वित्यर्थः। अथ प्रत्यक्षस्तुतिः—हे सोम! "स्वानः" सुवानोऽभिषूयमाणस्त्वम् "पवित्रे" "आर्ष" आभिमुख्येन-चर।

"द्युक्षऽसनद्रयिं"-"द्युक्षःसनद्रयि"-इति, "स्वानः"-"सुवानः"-इति च साम्नऋचः पाठौ ॥१० ॥ ३०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* ऋ० ७, १, ६, १।

† "आङ्गिरसः"-इति ऋषि-नै०।

‡ "द्युतौ क्षियन्तइति द्युक्षम्"-इति वि०।

¶ 'सनत् चिरन्तनम्'-इति वि०।

§ 'अन्धसा तर्पितः'-इति वि०।

॥ "नः अस्मान् प्रति'-इति वि०।

अथ चतुर्थे खण्डे—

सैषा प्रथमा।

१ २   ३ २   ३ १ २ ३   २   ३ १र   २र ३ २
अचिक्रदद्वृषाहरिर्महान्मित्रोनदर्शतः।
१र   २र
सꣳसूर्येणदिद्युते॥ १ ॥ ३१

ओम्॥ (वार्षाहरम्॥) अचिक्रदा३त्। अचिक्रदा५दे। वृषाहरा३इ। वार्षाहरा३इ। वृषाहरा५ए। मह्यान्मित्रा३ः। माहान्मित्रा५ए। महाम्मित्रा५ए। नदर्शता३ः। नादर्शता३ः। नदर्शता५ए। सꣳसूरिया३इ। साꣳसूरिया३इ। सꣳसूरिया५ए। णादिद्युता३इ। णादिद्युता३इ। णदा५इद्यताउ। वा॥ १ ॥ ३१

मेध्यातिथिर्ऋषिः†। "वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" पूज्यः "मित्रोन" यथा सखा तद्वत्। "दर्शतः" दर्शनीयोयः सोमः "अचिक्रदत्" शब्दङ्करोति सोयं सोमः "सूर्य्येण" सह "दिद्युते" दिवि प्रकाशते॥ ["दिद्युते"-"रोचते" -इति सामऋचः पाठौ॥ १ ॥ ३१

* छ० ४, १, ३, ९ = ऋ० ६, ७, १९, १।

† "काण्वः"-इति ऋषि-कै०।

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ १ २
आतिदक्षम्मयोभुवंवह्निमद्यावृणीमहे।
३ १ २ ३ १ २
पान्तमापुरुस्पृहम् ॥ २ ॥ ३२*

५र र २ १ २ २
( वार्षाणि त्रीणि ॥ ) आतेदक्षाम्। मयोभू३वाम्।
१ २ १ ७ ३ ५ १ २ ऽ २
वह्निम। द्या। वृणो२मा२३४ हाइ। पान्तमा३। ई३या।
१ १ ३ ५र र १ ५
पुरू२३। स्पृ२हा२३४ औहोवा। ऊ३२३४पा ॥ २ ॥
२ ३ ५ २ ३ ५ २ ४
आतेदा२३४क्षाम्। मायोभू२३४वाम्। वह्नि-
३र ४ ५र ३ ५ १ २ २ ऽ २
मद्यावृणो। महो२३४ हाइ। पान्ता३मा३। ई३या३।
१ ३ ५र र ३ ५
पूरु२३४ औहोवा। स्पृ२३४हाम् ॥ ३ ॥
३र ४र ३ ४ ५ ३ ३ ४ ३र ४ ५ र
आतेदक्षम्मयः। भुवो२३४हाइ। वह्निमद्यावृणो।
३ ५ १ २ १ २ १
महो२३४हाइ। पान्ता१मा२। पूरुस्पृहम्। इडा२३
२ १
भा३४३। ओ२३४५इ। डा ॥ ४ ॥ ३२

---

* उ० ४, २, २, १० = ऋ० ७, २, ७, १।

अथ तृतीया ।

१ २ ३ १ २ ३ १र २र ३ २ ३ १ २
अध्वर्योअद्रिभिःसुतꣳसोमम्पवित्रआनय ।
३ १ २ ३ १ २
पुनाहीन्द्रायपातवे ॥ ३ ॥ ३३*

(वैरूपे द्वे ॥) अध्वर्यो२३४आ । द्रिभाइः हु३ता ३म् । सोमा२म्पा२३४वी । त्राआ१नाया२ । पुना २३ । हीन्द्रा३४औहोवा । यपातवे१२३४५ ॥ ५ ॥

अध्वर्यौ । होअद्री । भिःसुतम् । औ३हो३वा३ ।

भृगुर्ऋषिः† । हे सोम ! यष्टारोवयं "तं" तव स्वभूतं "दक्षं" बलम् "अद्य" अस्मिन्यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे । कीदृशम्? "मयोभुवं" सुखस्य भावयितारं "वह्निं" धनादीनां प्रापकम्‡ "पान्तं" शत्रुभ्योरक्षकम् । "पुरुस्पृहं" बहुभिः स्पृहणीयं काम्यमानम्बलमिति ॥ २ ॥ ३२

---

* उ० ५, १, ११, १ = ऋ० ७, १, ८, १ = ऊह्ये ४, १, १० ;—४, २, १—२—३—४—५—६ ;—१६, २, १३—१४ ।

† 'वारुणिः—भार्गवो वा जमदग्निः'-इति ऋषि-मै० ।

‡ 'वहेयागिकार्यरवेहेतुः (भा० उ०) ।

अथचतुर्थी।

२ ३ १ ३ १ २ ३ १ २ ३ १र २र
तरत्समन्दीधावतिधारासुतस्यान्धसः।
२ २ ३ १ २
तरत्समन्दीधावति ॥ ४ ॥ ३४*

१र ३ ५ १ २ १ १
सोमार२म्या२३४वी। ओवाआ१नाया२। पुना२३। हा२इ
३ ५र र २ १र २ ३ १ १ १ १
न्द्रा२३४औहोवा। यपातवे२३४५ ॥ ६ ॥ ३२

५ २र १ २ १र
(तरन्तः ॥) तरत्समा। दीधावा१ता२३इ। धारा-
३ ५ २ १ १ ३ ५र र १
२सू२३४ता। स्यआ२३१धा२सा२३४औहोवा। तरत्सम
र २र ३ २ १ १ १
न्दीधावती२३४५ ॥ ७ ॥ ३४

उचथ्यऋषिः†। हे "अध्वर्यो!" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं सोमं "पवित्रे" "आनय" प्रापय। एतदेव दर्शयति—"इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय‡॥

"पुनाहि"-"पुनीहि"-इति, "आनय"-"आसृज"-इति च साम्नऋचः पाठः॥ २॥ ३३

* उ० ४, १. ५, १ = ऋ० ७, १, १५, १=आर० १, २, १४।

† "आङ्गिरसः"-इति ऋषि-नि०।

‡ 'पूतं कुरु'-इति स्पष्टं विवरणं।

अवत्सारऋषिः*। "मन्दो" देवानां हर्षकः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" द्रोणकलशङ्गच्छति†। धावतीति पुनरपि तदेवाह्णान्यन्त्वा दरार्थं तरत्सन्दद्रोधावतीति। यद्वा। अस्यऋचोयास्केनोक्तार्थो द्रष्टव्यः। तद्यथा—"तरति स पापं सर्वं मन्दो यः स्तौति धावति गच्छत्यूर्ध्वां गतिन्धारा सुतस्यान्धसोधारयाभिषुतस्य मन्त्रपूतस्य वाचा स्तुतस्येति (नि० प० १३, ६)" ॥ ४ ॥३४

---

* "काश्यपः"-इति ऋषि-नैगेयः।

† अत्रेदं विवरणम्—"तरत्सु। विनियोगोस्य षष्ठेऽहनि। चतुर्ऋचोभवति प्रतिष्ठायै। प्रतिष्ठायै यजमानाय ध्वस्रौ वै पुरुषन्तौ तरन्तध्वस्रावदेव्य स्त्रियः पुरुषन्त्यो बहु सम्भजन्त्यो बहु पुरुन्तरन्त-पुरुमीढाभ्यामर्षाभ्या वैदद्श्विभ्यां सहस्राणि अदिन्मताम् दातुमिच्छन्ताम् तौ पुरुमीढ इंचेता मनसां ग्राह्यमग्राह्यमिति। कथं केन प्रकारेण नौ आवामिदम्। आत्तम् अप्रतीगृहीतं स्यादिति। तौ प्रत्येतां चतुऋचमप्रत्यर्थं ध्वस्रयोः। पुरुन्त्योरमन्त्योः आददहे सहस्राणि आत्तवन्तौ तरत् तरन् प्रतिग्रहदोषतः मन्दी सोमः धावति शोधयति। तयोर्विज्ञानयो आत्तं गृहीतम् अप्रतिगृहीतं भवति अन्यचापि आत्तं अमु. अप्रतिगृहीतं भवति गृहीतमपि यः। एवं विजानाति विनाशं सो नाति। तरन्त-पुरुमीढो उभयस्याभाद्यन्यावरुध्यौ। मनुष्यस्य च देवस्य च अवरोधनार्थं तथाच गौतमः—'अप्रतिग्राह्यं प्रतिजिघृक्षन् प्रतिगृह्य वा चतुऋचं तरत्समन्दीत्यप्सु जपेत॥ तरत सः मन्दी सोमः धावति शोधेति। गच्छति वा शोधयति वा शोधयति वा पापं। न केवलं सोमः धारा अपि सुतस्य अन्धसः अन्नस्य सोमलक्षणस्यातरत्। तरति स पाप यस्य मन्दी धावति शोधयति उक्ता मध्यमिका वाक् धारा वा वेद विजानाति। वसूनां मर्त्यस्य देवो अवसः एवगुणविशिष्टा धारा। ध्वस्रयोरिति व्याख्याता। आययोः पुरुषन्त्योः तोशनं तृंशच्छतानि धारानां सहस्राणि च आददहे—तरत्समन्दी-भवति ॥"-इति।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ १ २
आपवस्वसहस्रिणꣳरयिꣳसोमसुवीर्य्यम्।
३ १र १र
अस्मेश्रवाꣳसिधारय॥ ५॥ ३५ *

(सोमसाम॥) ५र आपवस्वा। २ सहस्रिणम्। १ ऊवाइ।
१ २ १र २ र १
ऊवा२३हो। रयिꣳसोमा। सुवीरियाम्। ऊवाइ।
१ २ र १ २ र १
ऊवा२३होइ। अस्मेश्रवा। सिधारया। ऊवाइ। ऊवा
१ २ ५र र ३ ५
२३होर। वा२३४औहोवा। ऊ२३४पा॥ ८॥ ३५

निध्रुविर्ऋषिः†। हे "सोम!" त्वं "सहस्रिणं" बहु-सङ्ख्याकं "सुवीर्यं" शोभन-सामर्थ्योपेतं "रयिं" धनं "आ पवस्व" आभिमुख्येन चर। अपिच "अस्मे"‡ अस्मासु "श्रवांसि" अन्नानि "धारय" स्थापय॥ ५॥ ३५

---

* ऋ० ७, १, ३०, १।

† "काश्यपः"-इति ऋपि-नै०।

‡ अस्मे इति, अस्मदः सप्तविभक्तिकमेव रूपं भवति। तत्र सुपामित्यादि (७, १ ३९) शेश्छन्दसीति च (६, १, ७० ) सूत्रं स्मर्त्तव्यम्। सप्तस्वपि श्रूयते बह्वृचि। तद्यथा—"अस्मे ते बन्धुः (१, २, १५, ७)"-इत्यत्र वयमित्यर्थः। "अस्मे यातं नासत्याः सजोषाः (३, ३, १, १९)"-इत्यत्र अस्मानित्यर्थः। "अस्मे समानेभिर्वृषभ पौं-स्येभिः (३, ३, ७, १०)"-इत्यत्र अस्माभिरित्यर्थः। "अस्मे प्रयन्धिमघवन्नृजीषिन्

अथषष्ठी।

१ २ ३ १ २ ३ १ २ ३१२ ३२
अनुप्रत्नासआयवःपदन्नवीयोअक्रमुः।
३ १ २ ३ १ २
रुचेजनन्तसूर्य्यम्॥ ६ ॥ ३६ *

(सूर्यसाम॥) ५ २ २ ५ २ १ अनुप्रत्नासआयाईवाः। पदन्न
२ २ ७ २ २ १ २
वीयो अक्रमूः। रुचाइजना। ताइसू। ऊम्मायेइ।
५
री२३४याम्॥ ८॥ ३६

†"प्रत्नासः" पुराणाः केचिद् "आयवः" गमनवन्तोऽश्वाः "नवीयः" नवतरं "पदं" "अन्वक्रमुः" अनुक्रमन्ते (रूपकव्यवहारेण सोमाः स्तूयन्ते) "रुचे" दीप्त्यै तदर्थं "सूर्य्यं" "जनन्त" जनयन्ति‡॥ ६॥ ३६

---

(६, ४, ४, १३)"-इत्यत्र अस्मभ्यमित्यर्थः। "अस्मे आराचिद् द्वेषः सनुतर्य्युयोतु (६, ६, १०, २)"-इत्यत्र अस्मदित्यर्थः। "ऊर्व इव पप्रथे कामो अस्मे (७, ३, १, १०)"-इत्यत्र अस्माकमित्यर्थः। "अस्मे धत्त वसवो वसूनि (७, ४, ८, ५)"-इत्यत्र अस्मास्वित्यर्थश्चेति॥

* ऋ० ६, ८, १३, २।

† ऋषिः स एव।

‡ अत्रेदं विवरणम्—"अनुप्रत्नासः पुरातनाः आयवः मनुष्याः वसिष्ठादयः पदं पद्यते उत्पाद्यते संसाराख्यं नवीयो नवतरं अस्मिन् कल्पे अक्रमुः क्रमितवन्तः अवेदीप्त्यर्थं जनन्त जनयन्त सूर्य्यम्।"-इति॥

अथ सप्तमी ।

१ २ ३ १ २ ३ १र २र ३ १ २
अर्षासोमद्युमत्तमोभिद्रोणानिरोरुवत् ।
३ २ ३ २ ३ २
सीदन्योनौवनेष्वा ॥ ७ ॥ ३७*

(दार्ढ्च्युतानि त्रीणि ॥) अर्षा । इहा । सोम द्युमा २त्तमा । इहा । अभाइ । इहा । द्रोणानिरो २ रुवा । इहा । सीदा । इहा । योनौवना २ इषुवा । इहा १ ॥ १० ॥

अर्षाहाउ । सोमद्युमत्तमा । भिद्रो २३णा । निरा औ३हो । रुवा २३त् । सीदाउवा । योनौवा३ने । ऊम्माये३ । षू२३४वा ॥ ११ ॥

अर्षासोमद्युम । त्तमाः । अर्षासोमा । द्यूमत्तमः । अभिद्रोणा२३हा । निरोरुवत् । साइदन्योना२३ऊहाइ । वनाइषू३२वा३४३ । ओ२३४५इ । डा ॥ १२ ॥ ३७

---

* उ० १, २, ११, १ = ऋ० ७. ७, ४, ४ = ऊहे २, १, ३—४ ; — ७, २, १३ = ऊह्ये १, १, ११ ;— १, २, १३ ;—२, १, २ ।

अथाष्टमी ।

१ २　६ १　२ ३ १ २　३ ३ २
वृषासोमद्युमाँ असिवृषादेववृषव्रतः ।
३ १ २
वृषाधर्म्माणिदधिषे ॥ ८ ॥ ३८ *

५ र र　२　१
(वृषकम् ॥) वृषासोमा। द्यु माँ २ आसा
१　२ २　१ २ ३　५　१ २
२इ। वृषादेवा३हा३इ। वार्षव्रा२३४ताः। वृषाधर्मा

भृगुर्ऋषिः† । हे "सोम !" "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "द्रोणानि" ( प्रयोगबाहुल्यापेक्षमेतद्बहुवचनम् ) द्रोणकलशानभिलक्षीकृत्य "रोरुवत्" पुनः पुनर्भृशं वा शब्दं कुर्वन् "अर्ष" आगच्छतु दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्नधारया पतन् शब्दङ्करोति खलु। तत्र दृष्टान्तः—"वनेषु" वननीयेषु‡ यज्ञेषु वनसम्बन्धिषु यज्ञगृहेषु वा¶ "योनौ" स्थाने§ "आसीदन्" यद्वा। वनेषु योनौ भूमौ आसदन् पूर्वं स्थितः सन् यज्ञगृहं अभ्यर्षयति सम्बन्धः ॥

"सीदन्योनौवनेष्वासीदन्"–"श्येनोनयोनिमितिसाम्नऋचः पाठौ ॥ ७ ॥ ३७

* छ० २, १, २, १ = ऋ० ७, १, २८, १ ।

† "वारुणः"-इति ऋषि-नैगेयः ।

‡ 'वनु षणु सम्भक्तौ ( भ्वा० प० )'-इत्यस्येदं रूपमिष्टमित्यभिप्रायः ।

¶ 'वनेषु उदकेषु'-इति वि० ।

§ "योनिः" इति गृहनामसु चतुर्दशं नैघण्टुकम् ( ३, ४ ) ।

अथ नवमी।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इषे पवस्व धारया मृज्यमानो मनीषिभिः।
१ २ ३ १ २ ३ २
इन्दो रुचाभि गा इहि ॥ ८ ॥ ३९ *

५ २ १ २ २ २ १
३। ई३या। णाइदक्षिपे। इडा२३भा३४३। ओ२३४५इ। डा ॥ १३ ॥

५ २ १ २ २ २ २
(ऐषम् ॥) इषेपवा। स्वधारयौहोवा३हा३४।
५ २ २ २ १ ३ २ १ २ ३ २ ३ ३ ५ २ २
औहोवा। मृज्यमा२नोमनीषिभिः। इन्द्रोरुचा। अभि
२ २ २ ५ २ २ १ २ २ १ १ १ १
गौहोवा३हा३४। औहोवा। उप्। इन्द्री२३४५ ॥ १४ ॥ ३९

कश्यपऋषिः†। से "सोम!" "वृषा" कामानां वर्षकस्त्वं "द्युमान्" दीप्तिमान् "असि"। अपिच हे "देव" द्योतमान सोम! "वृषा" त्वं "वृषव्रतः"‡ वर्षणशीलकर्म्मासि। किञ्च हे सोम! "वृषा" त्वं "धर्म्माणि" देवानां मनुष्याणां च हितानि कर्म्माणि¶ "दक्षिषे"-"दधिषे"-इति पाठौ ॥ ८ ॥ ३८

---

* उ० २, २, ४, १ = ऋ० ७, १, ३८, ३।

† "मारीचः"-इति ऋषि-मैं०।

‡ "व्रतम्"-इति कर्मनामसु सप्तमं नैघण्टुकम् (२, १)।

¶ 'धर्माणि धारणानि'-इति वि०।

अथ दशमी ।

३ १ २　३ १ २ ३ १ २　१ २
मन्द्रयासोमधारयावृषापवस्वदवयुः ।

३ १ २　३ २
अव्यावारेभिरस्मयुः ॥ १० ॥ ४०*

५ र　२ १ र　२
(श्यावाश्वम् ॥) मन्द्रयासो । मधारया । वृषापा

२　१　२　१　१ ३
स्वा । स्वदाइवार३यू: । अव्यार३: । वा२रा२३४

५र र　२ ३ २
औहोवा । भिरस्मयू१: ॥ १५ ॥ ४०

काश्यपऋषिः† । हे "इन्दो" सोम ! "मनीषिभिः" ऋत्विग्भिः‡ "मृज्यमानः" शोध्यमानस्त्वं "इषे" अस्माकमन्नाय¶ "धारया" "पवस्व" चर "रुचा" रोचमानेनरन्धसा§ "गाः" पशून् "अभीहि" अभिगच्छ ॥ ८ ॥ ३९

असितऋषिः‖ । हे "सोम !" "वृषा" कामानां वर्षिता "देवयुः" देवकामः "अस्मयुः" अस्मत्कामश्च त्वं "अव्या" अवेः

---

* ऋ० ६, ७, २८, १ ।

† "मारीचः"-इति ऋषि-निर्णयः ।

‡ "मनीषी"-इति मेधाविनामसु एकादशं नैघण्टुकम् ( ३, १५ ) । 'मनसा एषक शीलैः'-इति वि० ।

¶ "इषम्"-इति अन्ननामसु चतुर्दशं नैघण्टुकम् ( २, ७ ) ।

§ 'रुचा दीप्त्या'-इति वि० ।

‖ "काश्यपो देवलो वा"-इति ऋषि-निर्णयः ।

अथैकादशी।

३ १ २ १ १ २ ३ २३ ३क २
अयासोमसुकृत्ययामहांत्सनभ्यवर्द्धथाः।
३ १२ २२
मन्दानइद्वृषायसे ॥ ११ ॥ ४१*

(अयासोमीयम्॥) ५ ४ ३ ४ ५ अया३सो३मसुक्रत्यया। २ १२ महां
७ ३ ५ १ २२ १ २ २
त्सन्ना। भ्यवा२र्द्धा२३४थाः। मान्दानआये३त्। वृषा३
४
या५सा६५ई३ ॥ १६ ॥ ४१

"वारेभिः" बलैः क्ते दशापवित्रे "मन्द्राय" मदकरया धारया "पवस्व" चर॥

"अव्यावारेभिः"-"अव्योवारेषु"-इति पाठौ॥ १०॥ ४०

कविः ऋषिः†। हे "सोम!" "अया" अनया "सुकृत्यया" शोभनया अभिषवादि-लक्षणया क्रियया "महान्" पूज्यमानः "सन्" देवान् प्रति "अभ्यवर्द्धथाः" अभ्यवर्द्धयः। "मन्दानः इत्" मोदमानः एव "वृषायसे" वृषवदाचरसि यथा मोदमानो वृषभः शब्दं करोति तथाभिषववेलायां उपरवेषु शब्दं करोषी-त्यर्थः॥

"अभ्यवर्द्धथाः"--"अभ्यवर्द्धत"-इति, "वृषायसे"-"वृषायते"-इति च पाठः॥ ११॥ ४१

---

* ऋ० ७, १, ४, १।

† "भार्गवोऽयम्"-इति ऋषि-लैशेय. "भारद्वाज"-इति चतु०।

अथ द्वादशी ।

३ १र २र ३ १र २र ३ १ २
अयंविचर्षणिर्हितःपवमानःसचेतति ।
३ २र २र ३ २
हिन्वानआप्यंबृहत् ॥ १२ ॥ ४२*

२ ३र ४र ५
(आग्नेयम् ॥) औ । हौहोवाहाइ । अयंविचा ।
२ १ २ ३र ४र ५ र २
षणाइर्हाइतो । औहौहोवाहाइ । पवमाना: । स
१ २ ३र ४र ५ र २ ५
चाइतातो । औहौहोवाहाइ । हिन्वानआ । पियौ३
२ ४ ५ ४ ५
हौ३ । हवोवा । बृ५हो६हाइ ॥ १७ ॥ ४२

जमदग्निः ऋषिः† । "विचर्षणिः" विद्रष्टा‡ "हितः" पात्रे निहितः "पवमानः" शोध्यमानः "अयं" सोमः "आप्यम्" अप्सु भवं "बृहत्" महत् अन्नं "हिन्वानः" प्रेरयन् "सचेतति"¶ सर्वैः सञ्ज्ञायते ॥ १२ ॥ ४२

---

* ऋ० ७, १, २५, ५ ।

† "भार्गवः"-इति ऋषि-नैगेयः ।

‡ "विचर्षणिः"-इति पश्यति-कर्मसु षष्ठं नैघण्टुकम् (३, ११) । चर्षणि शब्दव्याख्यानावसरे यास्कः "चायिता"-इत्याह (५,२४) । 'विचर्षणिः सर्वं पश्यति'-इति वि० ।

¶ 'सचेतति सम्यगानयति'-इति वि० ।

अथ त्रयोदशी।

१ २    ३ १२  २२ ३ १२   १२
प्रन*इन्दोमहेतुन†ऊर्म्मिन्नबिभ्रदर्षसि।
३ २३१ २   ३१ २ २
अभिदेवाँअयास्यः॥ १३॥ ४३ ‡

३४५ २ २    १ ३    ५
(आयास्यम्॥) प्रनइन्दोएँ। होएँहो२३४या।
३१२   १   ५ १   २ १     १
महेतुनए २होएे २होऽ३या। ऊर्म्मिन्नबिभ्रदर्षसए २होएे
५ २   १ २   १ ३   ५२ २   ३१२
२होऽ३या। अभाये३। दाऽ३इवा२३४ औहोवा। अया
२ ३ १ १ १ १
सिया२३४५ः॥ १८॥

३ ४ ५२ २    २   २ ५
(आयास्यमुत्तरम्॥) प्रनइन्दो। इया३४२इ३४या।
३१२   ५ २   २ १   ५ २
महेतुनइया २ई३या। ऊर्म्मिन्नबिभ्रदर्षसइया २ई३या।
१ २   १ ३   ५२ २   २   ३१२
अभाये३। दाऽ३इवा२२४औहोवा। ए३। अया-
२ ३ १ १ १ १
सिया२३४५ः॥ १९॥ ४३

---

* "प्रण"-इति
† "महेतम"-इति च } —ऋ०।
‡ ऋ० ७, १, १, १।

अथ चतुर्दशी ।

३  १ २  ३ २उ  ३ १  ३  १ २
अपघ्नन्पवतेमृधोपसोमोअराव्णः ॥
३  १  २   ३ २
गच्छन्निन्द्रस्य निष्कृतम् ॥ १४ ॥ ४४*

॥ इति द्वितीय-दशति ॥

२ र  ५  ४  ५
(भारद्वाजम् ॥) हाउइ२३४या । २ । इयाहाइ ।
२ १  २ र १ १ १  २ र  ५  ४  ५
अपघ्ना२३न्पा३४५ । हाउइ२३४या । २ । इयाहाइ ।
२ १  र  २  ५र र  १ र २र
वताइ । मा२ । धा२३४ । औहोवा । अपसोमो२
१ २र  १ १ १  २ र  ५  ४  ५
अरा२व्णा३४५ः । हाउइ२३४या । २ । इयाहाइ ।

अयास्यऋषिः† । हे "इन्द्रो" क्लिद्यमान !‡ त्वं "नः" अस्माकं "महे" महते "तने"¶ धनाय "प्रार्षसि" प्रगच्छति । "न" संप्रत्यर्थे§ अयास्यश्चायमृषिः तव "ऊर्मिं" तरङ्गं "बिभ्रद्" धारयन् देवान् यष्टुमभि गच्छति ॥ १३ ॥ ४३

---

* उ० २, ५, १, ७, १ = ऋ० ७, १, १२, ५ ।

† "आङ्गिरसः"-इति ऋषि-नैगेयः ।

‡ "इन्दुरिन्धे उनत्तेर्वा"-इति (४, ४१) यास्कोक्तउनत्तेर्योगार्थएवेह स्पृश्यते । उन्दी क्लेदने ( रु० प० ) ।

¶ "तना"-इति धननामसु पठ्यते (२, १० नै०) ऋग्वेदीयपाठोऽपि 'तने'-इत्येव ।

§ "अथ निपाता उच्चावचेष्वर्थेषु"-( नि० १, २ ) इत्याद्युक्तेः ।

२ १ २ ११११ २ ३ ५ ४ ५
गच्छन्ना२३इन्द्रा२३४५। होइ२३४या। २। इयाहाइ।
२ १ २ ५ र र १११११
स्यनाइः। का२। ता२३४। औहोवा। इ२३४५ ॥२०॥ ४४

अमहीयुः ऋषिः*। "सोमः" "मृधः" हिंसकान् शत्रून्† "अपघ्नन्" मारयन् "अराव्णः" यज्ञे सत्वाद् धनानामदातृंश्च‡ अपघ्नन् "इन्द्रस्य" "निष्कृतं"¶ स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया चरति॥ १४ ॥ ४४

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य चतुर्थः खण्डः ॥४॥

---

अथ पञ्चमे खण्डे—

सैषा प्रथमा।

३ १ २ ३१ १ २ ३१र २र
पुनानःसोमधारयापोवसानोअर्षसि।
१ २ ३ १र २र ३ १ २ ३ २ १ २ १ २ ३ १ २
आरत्नधायोनिमृतस्यसीदस्युत्सोदेवोहिरण्ययः ॥१॥ ४५§

---

* "आङ्गिरसः"-इति क्वापि नैगेयः।

† 'मृधः सङ्ग्रामान् पाप्मनो वा'-इति वि०।

‡ 'अराव्णः अस्तुताभिः शस्तारः'-इति वि०।

¶ 'निष्कृतं संस्कृतम्'-इति वि०, परिष्कृतमित्यर्थः।

§ उ० १, १, ९, १=ऋ० ७, ५, १९, ४=आर० १, १, १७=ऊहे १, १, २—३;—१, २, १०;—२, १, १;—४, १, १—५—६;—६, १, २—११—१२;—६, २, २—१२;—१०, १, १२—१३—२०;—११, २, १९;—१३, १, ७—१९;—१३, २, १५;—१५, २, ३—४; १७, १, १०—११—१६;—१८, १, ७— २०—२१;—१९, १, २०;—२०, २, ११—१५—१६—१७;—२२, २, ८= ऊह्ये १, २, १०;—३, १, ९—२०,—४, १, ५;—४, २, ४—१५,—५, १, १४;—५, २, ८;—६, १, ७।

५ र    १ ३    ५र र

( आयास्यम् ॥) पुनानःसो । मा२धा२३४औहोवा ।

३ ५ २ १र ऽर र १र २ २

रा२३४या । अपोवसानोअर्षसि । आरत्ना३धाः ।

१र २ २ १ ३ ५र र ३ ५

योनाइमार्त्तार्३ । स्या२मा२२४औहोवा । दा२३४सी ।

१ २ ३ १ ३ ५र र ३

उत्सो दि ३ वो३ । हा२इरा २ ३ ४ औहोवा । एया-

५

२ ३ ४ याः । ॥ २१ ॥

१ ऽ २ १र ३ २

( माण्डवम् ॥ ) इया २ई३या । पुनानःसो२ । मधा

३ ५ २ १र र २र १ २ १र र र

रा२३४या । अपोवसानो अर्षा२३सी । आरत्नधायोनि

२ १र २ ३ र २र १ १ ३ ५र

मृतस्यसीदा२३सा । उत्सो दिवो२३ । हा२इरा२३४औ

र २ १ १११ १

होवा । एया३या२३४५ः ॥ २२ ॥

५ र ४ ५र ४र ५ ४ २ १र

( आपदासम् ॥ ) पुनानःसोमधारया । अपोव

२र र ऽ २ ऽ २ १र २ १र र २ १ १

सानोअर्ष । स्यो३हा । ओ३हा । आरत्नधायोनिमृतस्य

र ऽ २ ऽ २ १ २ ऽ

सीद । स्यो३हा । ओ३हा । उत्सोदा२इवा २ः । ओ

२ ऽ २ १ २ १

३हा । ओ३हा । हिरण्या२३या३४३ः । ओ२३४५इ ।

डा ॥ २३ ॥

४ र  र ४  १  १
(सोमसाम॥) पुनानःसो५मधारया। आपो२वासा

र १  १  २र  १
२। नो३अर्षसी। आ ३रत्नाधा२ः। योनिमात्ता२।

१र  १  १  २
स्यसीदसी। ऊत्सो३२दाइवा२ः। हिरण्या२३या३४३ः।

१
ओ२३४५इ। डा॥ २४॥

४  ५ ४  १  २ १र
(ऐडमायास्यम्॥) आइपुना। नाःसो। मधा

र १  २ १  २
रया। आपोवसा३१। नो३अर्षसी। आरत्न धा३१ः।

र  २ १र  २  २ १
योनिम्रता। स्यसीदसी। ऊत्सो ३दिवा३१ः। हिरण्या-

२  १
२३या३४३ः। ओ२३४५इ। डा॥ २५॥

५ र ४ ५र  ४र ५ र  र४  ४ ५
(माण्डवम्॥) पुनानःसोमधारया। पोवसोवा।

१र  २  १र १  १  १ २ १  १र
नो३अर्षसि। आरत्न। धाउवा२३। होवा३हाइ। योनि

२ १ २ र  १२र र  १  १ २  १
म्रतस्यसीदसि। उत्सो ३दे। वाउवा२३। होवा३हाइ।

१  २  १
हिरण्या२३या३४३ः। ओ१२३४५इ। डा॥ २६॥

५ र ४ ५र  ४र  ४
(उद्दत्प्राजापत्यम्॥) पुनानःसो ३मधा। हो५रया।

२ १र  र २ १  १  १र  र र  २ १
अपोवसानआहो२। षासी२। आरत्नधायोनिमतस्यसा

१ १ १ १
होरेइ । दासीरे । उत्सारेहो१इ । दार३इवोर ।
२१ ५ ४ ५
हिरोर३४वा । ण्या५यो६हाइ ॥ २७ ॥

४र र र र ४ ५
(त्रीणिधनमायास्यम् ॥) पुनानःसोमधाःहाउहोवा ।
२ २ ३ ५ १ २ २ ३ ५
रायाऽ२र३४पो । वसार२ । नआ३४५ । षार३४सी ।
१र २ ३र ४र ५ १ र र १ २
आरा३४ । औहोवा । त्वधायोनिमृतारे । स्यसा३४
३ ५ १ २ ३र ४र ५ १
५इ । दार३४सी । उत्सा३४ । औहोवा । दाइवोर ।
३ १ २ ५
हिरा३४५ । ण्यार३४याः ॥ २८ ॥

४रर ४ ५र ४र ५ ४ १ १र
(कण्वरथन्तरम् ॥) पुनानःसोमधारया । अपोवसा ।
२ १ २ २ र रर र २ ५र
नो३आर्षा३सी । आरत्वधायोनिमृतस्यसीःदसार३४ऐही ।
२ १र ५ २१ १ १ २ १
उत्सोदार३३इदाः । हिरा३१उवार३ । ए३ । ण्ययआ
॥ २९ ॥

४ र ३ ४र ३र ४५र
(तिरश्चीनिधनमायास्यम् ॥) पुनानःसोमधारया ।
२ २ ४ १ २ १ ३ ५
ए३ । औ३होपुवाऽ । आपो३ । वसार२ । नआ३४५ ।
२ १ २ १ २ १ २ १
षा३सीर । आरत्वधाः । योनिमृता । स्यासा३आ ।

औ३होइ। दा२३४सी। उत्साऔ३हो। दाइवो२।
हिरा३४५। ण्या३या२३४५ः॥ ३०॥

(सदोविशीयम्॥) पुनानःसोमधारयाओहाओहा३ए।
औहोऔहोइवा। अपोवसानोअर्ष। स्योइहा। ओ२हा
३ए। औ३होइ। औ३हो२वा। आरत्नधायोनिमृतस्यसीद।
स्योइहा। ओ३हा३ए। औ३होइ। औ३हो३वा।
उत्सोहा१इवा२ः। ओ३हा। ओ३हा३ए। औ३होइ।
औ३हो३वा। हिर। ण्या२या२३४ओहोवा। सदो
विशा२३४५ः॥ ३१॥

(स्ववासिनी द्वे॥) ओ२हो१। वाओवा। २।
ओ२हो१। वाओवा३। ओ२वा२३४औहोवा। पुना
नःसोमधारया। पोवसानोअर्षसि। आरत्नधायोनि
मृतस्यसीदसिउत्सोदेवाः। ओ२हो१। वाओवा। २।

२　　१　३　५र　र　　२
ओ२हो१। वाओवा३। ओ२वा२३४औहोवा। ए३।
र　१　१११
हिरण्यया२३४४ः॥ ३२॥

२　३　२　१　३　५र　र
ओ३। हो१। वाओवा३। ओ२वा२३४औहोवा।
१र　१　२र　१र　२र　१र　२र　र　१र　११र　र
पुनानःसोमधारया। पीवसानोअर्षसि। आरत्नधायो
२१　२　र　　२　　२　１　３
निमृतस्यसीद। स्यो३। हो१। वाओवा३। ओ२वा
५र　र　　१　२र　२१र　र　　१　२
२३४औहोवा। उत्सोदेवोहिरण्ययः। इडा२३भा३४३।
१
ओ२३४५इ। डा॥ ३३॥

२　２　２　２　२　५
(प्लवः॥) हा। वो३हा३। वो३हा। हा। ओ२३४वा।
२　３　４　२　३　४　२　३
हाइ। पूनाना२३४ःसो। माधारा२३४या। आपीवा
५　२　३　५　२　३　५　२
२३४सा। नोअर्षा२३४सी। आरत्ना२३४धाः। योनी
३　५　２　３　５　２　３　５　२
मा२३४र्त्ता। स्यासीदा२३४सी। उत्सोदा२३४इवो। हाइ
३　५　२　२　२　२
रण्या२३४याः। हा। वो३हा। वो३हा३। हा।
३　५　२　५र　र　२　१　२　१　२र
ओ२३४वा। हा३४। औहोवा। ए३। अतिविश्वानि
१र　२　र　३　१११
दुरितातरेमा२३४॥ ३४॥

२ र र १ ५ १ र
(रौरवम्॥) पुनानःसोमा३धारा२३४या। आपो
र र र र र ३ २ १ १
वसानोअर्षस्यारत्नधायोनिमृतस्यसा२इदसाइ। ओहा३
२ १ र र र २ १ २ १ १
उवा। उत्सोदेवोरा२३हाइ। ओहा३उवा। एग्रया।
२ ४ ५ ४
औ३होवा। होपूइ। डा॥ ३५॥

३२ १ ४ ४ २ ५
(यौधाजयम्॥ पुना२१। ना३ःसो। म। धारा
५ १ २ १ ३२ २ ५
२३४या। आपो३। वसा२। नआ३४५। पा२३४सी।
१र १ २ १ २र १ १ २ २ ५
आरात्नधाः। यो। निमृता२। स्यसा३४५इ। दा२३४सी।
२ १ ३ २ २ ५
उत्सा२ः। दाइवो२। हिरा३४५एग्रा२३४याः॥ ३६॥ ४५

॥ इति चतुर्द्दशस्यार्द्धः प्रपाठकः॥

भरद्वाजादयः सप्त ऋषयः*। हे "सोम!" "पुनानः" शोधकः "अपः" वसतीवरीः† "वसानः" आच्छादयन् "धारया" "अर्षसि" गच्छसि द्रोणकलशे किञ्च "रत्नधा" रमणीयानां धनानां दाता‡ त्वम् "ऋतस्य" यज्ञस्य "योनिं" स्थानम् "आसीदसि"

---

* "सर्वासां सप्त ऋषयोभरद्वाजः काश्यपोगोतमोऽत्रिर्विश्वामित्रोजमदग्निर्वसिष्ठ इत्येते"-इति ऋषि-क्रमेयः। सर्वासामेतद्दशरत्नानां द्वादशानामित्यर्थः।

† "अपः उदकानि"-इति वि०।

‡ 'रत्नान् धारयन्'-इति वि०।

अथ द्वितीया ।

२ ३ १ २ ३ २ ३ १ १ २ १ २ १ २
परितोषिञ्चतासुतꣳसोमोयउत्तमꣳहविः ।
३ १ २ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
दधन्वाङ्ग्योनर्यौअप्स्वां३तरा*सुषावसोममद्रिभिः ॥ः ॥४६†

५ र र २
(अच्छिद्रम्॥) परीतोषी । चता३१उवा२३ । ह२
५ १र २र १ २ १ २ १ ५र र २
३४ताम् । सोमो२यउत्तमꣳहवोः । सोमोयऊ । तमा
५ २ १र र २र १ १ १र
३१उवा२३ । हा२३४वोः । दधन्वाꣳयोनर्यो२प्सुवन्तरा ।
५ र १ २र १ २
दधन्वाꣳयाः । नर्यो२ । आ । प्सवा३१उवा२३ । ता
५ २ १र र ३ ५ र २
२३४राः । सुषावसोममद्रिभो२३४ः । सुषावसो । ममा
५
३१उवा२३ । द्रा३४इभोः ॥ १ ॥

अपि च “देवः” द्योतमानः सोमः “उत्स.” प्रस्यन्दनशीलः सन् “हिरण्ययः”‡ देवानां हितरमणीयो¶ भवसि खलु ॥

“देवो”-“देव”-इति साम्नऋचः पाठौ ॥ १ ॥ ४५

---

* “स्वं १तरा”-इति ऋ० स्वरपाठः ।

† उ० ५, ०, १२, १=ऋ० ७, ५, १२, १=ऊह्ये ५, २, १,—२—३—४—५—६; —७, १, ३—४;—७, २, ३—४;—८, १, ३;—८, २, ४;—८, ३, ७—११;—१२, १, १८;—१२. ३, २०;—१५, १, ६;—१५, २, १२—१३—१४;—१६, १, ५—६;—१८, १, १८—ऊह्य १, १, २—३—४—५—६—७—१२;—२, २, ६—१० ।

‡ “ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि (पा० ६, ४, १७५) ।

¶ ‘हिरण्ययः रमणीयः’-इति वि० ।

(रयिष्ठम्॥) परीतोषी। चताम्ह३ताम्। औ३-
हो३वा। औ३हो३वा। ई३या। ई३या३४। हा।
हाउवा। सोमो२यउत्तमꣳहवोः। सोमोयऊ। त
माꣳहा३वीः। औ३हो३वा। औ३हो३वा। ई३या।
ई३या३४। हा। हाउवा। दधन्वाꣳयोनर्यो२प्सुवन्तरा।
दधन्वाꣳयाः। नर्यो२। आ। प्सू३आन्ता३रा। औ३
हा३वा। औ३हो३वा। ई३या३४। हा। हाउवा।
सुषावसोममद्रिभी२३४ः। सुषावसो। ममाद्री३भाइ।
औ३हो३वा। औ३हो३वा। ई३या। ई३या३४। हा।
हाउवा३। ऊ३२३४पा॥ २॥

(भारद्वाजे द्वे॥) औहोइपरीतोषी। चतासुतम्।
औ३होइ। औहोइ। आ३। औहो३वा। सोमो-
२यउत्तमꣳहविः। औ३होइ। औहोइ। आ३। औ
हो३वा। दधन्वाꣳयोनर्यो२प्सुवन्तरा। औ३होइ। औ-

१ ५ १र २ १र र २ ५
हाइ। आ३। औहा३वा। सुषावसोमद्रिभिः। औ
२ ३र २ १ ५ ५
३होइ। औहोइ। आ२३४। उऊवा६हाउ। वा॥ ३॥

४ ५ २र १ ५र १
ए। येंपारी। तोषिञ्चता२सुतम्। आउवा२३।
२र ३ २र ३ ५ १ १र ५र १ २ १ २ १
हाउहाउ। हो३वा। सोमो२यउत्तमꣳहविः। आ-
२र ३ २र ३ ५ २ १र र ५र
उवा२३। हाउहाउ। हो३वा। दधन्वाꣳयोनर्यो२
१ २ १ २र ३ १र ५ २ १र
प्सुवन्तराउ। वा२३। हाउहाउ। हो३वा। सुषावा
२ २र ३ २र ३ ५ १ ३ २ १
२३सो३। हाउहाउ। हो३वा। मम। द्रा२३४इभा
५ ५
इ। उऊवा६हाउ। वा॥ ४॥

५ र र र १र
(आभीशवम्॥) परितोषिञ्चतासुतम्। ए। सो-
र १ ७ २ १ ५ २ १र र
मोयउ३त्तामꣳहाविः। दा२३४धा। हाइ। न्वाꣳयो
र ७ २ ३ ५ २ १ र २ १
नर्योअप्सुअन्तारा। सू२३४षा। हाइ। वासोममो२-
५ ४
३४वा। द्रा५इभोई६हाइ॥ ५॥

५ र र र
(उत्तरमाभीशवम्॥) परीतोषिञ्चतासुतम्। ए।

२र र १ ७ २ ३ ५ २ २

ए। सोमोयऊ३त्तामञ्ह्वाविः। दार३४धा। हा३हाइ।

१र र र ७ २ ३ ५ २ २ १

न्वाञ्योनर्योअप्सुअन्तारा। हा२३४षा। हा३हाइ। वा

र २ १ ५ ४ ५

सोममो२३४वा। द्रा५इभोई हाइ॥ ६॥

४ ५र ४र ५ र ४ १र

(माण्डवम्॥) परीतोषिञ्चतासुतम्। इहा। सो

र २ १ २ १ २ १र र र २

मोयउत्तमञ्हा२३वोः। इहा। दधन्वाञ्योनर्योअप्सु

१ २ १ २ १र २ १ २ १

वन्ता२३रा। इहा। सुषावा२३सो। इहा। ममा२३।

१ ३ ५र र ३ ५

द्रा२इभा२३४औहोवा। ई२३४हा॥ ७॥

४ ५र ४र ५ र ४

(माण्डवमुत्तरम्॥) इहा। परीतोषिञ्चतासुतम्।

१र र २ १ २ १ २ २

इहा। सोमोयउत्तमञ्हा२३वोः। इहाउवा३। ऊ३-

५ २ १र र र २ १ २ १ २

४पा। दधन्वाञ्योनर्योअप्सुवन्ता२३रा। इहाउवा३।

२ ५ २ १र २ १ २ २ ५

ऊ३४पा। सुषावा२३सो। इहाहाउवा३। ऊ२४पा।

२ १ २ १ २ २ ५

ममद्रा२३इभोः। इहाउवा३। ऊ२२३४पा॥ ८॥

४ ५र ४र ५ र ४ १र १र

(अभीवासः साम॥) परीतोषिञ्चतासुताम्। सोमो

२ १   २१   २ १   १   ३   ५   १   ५
यज्ञ । तमᳲस्वाइः । दाधाओ२३४वा । ऊ२३४पा ।
१२ २ २ २ १ १ १२ १ १ १
न्दाᳲयोनर्योअप्सुवन्ता२३रा । सुषावा२३सो । मामद्रि
१ १ १
भिः । इडा२३भा३४३ । ओ२३४५इ । डा ॥ ९ ॥

४ ५२ ४२ ५ २ ४ ५ ५
( परिदासःसाम ॥ ) परीतोषिञ्चतासुतम् । ओ६वा ।
१२ ३२ १ २१ २ १ २ १ १ १
सोमोरयउत्तमᳲहविः । दधान्वाᳲयो३ । हा२हाइ । न-
३२ १ २ १२ १ १ १ १
र्यो२प्सुवन्तरा । सुषावासो३ । ह३हा । मामद्रिभिः ।
१ १ १
इडा२३भा३४३ । ओ२३४५इ । डा ॥ १० ॥

४ ५२ ४२ ५ ६ ४ १२ २
( वैणवम् ॥ ) परीतोषिञ्च । ता५सुताम् । सोमेर
१ १२ २ २ २
यउत्तामा२१२म् । हावी२ः । दधन्वाᳲयोनर्योअप्सु-
१ १२ २ २१ ५
वा२१२ । तारा२ । सुषावा२३सो३ । नमो२३४वा ।
४ ५
द्रा५इभो६हाइ ॥ ११ ॥

१ २ २ १ २
( सौमक्रतवीयम् ॥ ) परीतोषा२इ । चतासुता२म् ।
१२ १२ १२ १ १ ३ १
ऐहो२ । ऐहो२ । ऐहिहा२इ । उवा२इ । ई३या ।

११ ख,

१र र १ १र १र
सामोयऊ२। तमꣳहवी२ः। ऐही२। ऐही२।
१र २ १ ऽ २ १ र र
ऐहिहा२इ। उवा२इ। ई३या। दधन्वाꣳयोनयो२।
१ १र १र १र २ १
प्सुवन्तरा२। ऐही२। ऐही२। ऐहिहा२इ। उवा
ऽ २ १ र १ १र
२इ। ई३या। सुषावसो२। मद्रिभा२इ। ऐही
१र १र २ १ ऽ २
२। ऐही२। ऐहिहा२इ। उवा२इ। ई३या३४३।
१
ओ२३४५इ। डा॥ १२॥

२ ३ ३ ५ ३ २ ३ २ ३ ५ २ र
(गर्द्दः॥) उपाउप। उपा३१। उपाउप। परो-
र ३ २र ३ ५ ३ २ ३ ५ ३ २ ३ २ ३ ५
तोषिञ्चतासुतम्। उपाउप। उपा३१। उपाउप।
२र र ३ २ ३ १ ३ २ ३ ५ ३ १ ३ २ ३ ५
सोमोयउत्तमꣳहविः। उपाउप! उपा३१। उपाउप।
१ र र ऽर २ ३ २र ३२ ३ ५ ३ २ ३ १
दधन्वाꣳयोनर्यो३प्सुवन्तरा। उपाउप। उपा३१। उपा
३ ५ २ र र २ २ ३ २ ३ २ ३ ५ ३ २ ३ २
उप। सुषावसोममद्रिभिः। उपाउप। उपा३१। उपा
४ २ ५
३ऊ५पा६५६। ऊ२३४पा॥ १३॥

५ऽ ऽ १ र र १ र
(प्रतोदः॥) हाउहाउहाउवा। परीतोषिञ्चतासु-
१ २ १ १ १ १ ऽ ऽ ऽ १ र र २
तम्। उपार२३४५। हाउहाउहाउवा। परीतोषिञ्च

२ १ ३ १ १ १ १ ५ ५ ५
तासुतम् । इहा । उपार२३४५ । हाउहाउहाउवा ।
१ २ २ २ २ १ २ १ १ १ १ १ १ १ ५
परीतोषिञ्चतासुतम् । अवोबृहत् । उपार२३४५ । हाउ-
५ ५ १ २ २ २ २ १ २ ५२ १ २
हाउहाउवा । परीतोषिञ्चतासुतम् । सोमोरयउत्त-
१ २ १ २ १२ २ ५२ १ २ १२ २ ३ १
मꣳहविः । दधन्वाꣳयोनर्योरप्सुवन्तरा । सुषावसोर-
१ १ १ ५ ५ ५ २ २ १ १ १ १ १ १
३४५ । हाउहाउहाउवा । ए३ । ममद्रिभीर२३४५ः ॥१४॥

२ १ ५ २ १
(महायौधाजयम् ॥) हाओ२३४वा२ । हा३आ-
५ २ १ २ २ २ २ १ २ ५२ ५१
२३४वा । हाउवा । परीतोषिञ्चतासुतम् । सोमोरय-
२ १ २ १ २ १२ २ ५२ १ २ १२ २
उत्तमꣳहविः । दधन्वाꣳयोनर्योरप्सुवन्तरा । सुषाव-
२ २ ३ ४ २ १ ५ २
सोममा । हाओ३३४वा । २ । हा३ओ२३४वा । हाउवा३ ।
२ १ १ १ १ १
द्रा३इभीर२३४५ः ॥ १५ ॥

हे ऋत्विजः । "सुतम्" अभिषुतं "सोमं" "इतः" अस्मात् कर्म्मणाम् "ऊर्ध्वम्" अथवा अस्मात् प्रदेशादूर्ध्वं "परिषिञ्चत" वसतीवरीभिः । ["इतोषिञ्चत" इत्यत्र संहितायां छान्दसं दोरुत्वम् । आदेशप्रत्यययोरिति षत्वम्] "यश्च" सोमः देवानाम् "उत्तमं" प्रशस्तं "हविः" भवति । अपिच "नर्यः"

अथ तृतीया।

१ २ ३ १र २र ३ १र २र ३ १ २
आसोमस्वानोअद्रिभिस्तिरोवाराण्यव्यया।
३ २ ३ २ ३क २र ३ २ ३ २ ३ १ २
जनोनपुरिचम्वोर्विशद्धरिःसदोवनेषुदध्रिषे ॥ ३ ॥ ४७*

३ ५ २ र ५र १ २
(आग्नम ॥) आ२३४सो। मस्वानो३आ। द्राइभा
३ ५ २ १र र ५र १ १ २ ३
ओ२३४वा। तिरोवारा२णिअव्यया२३। जानाओ२३४
५ १ २ ३ ५ १ ५र ५र १
वा। नापाओ२३४वा। रिचमुवेवोरर्विशद्धरी२३ः।
१ २ ३ ५ १ २ ३ ५ ४
सादाओ२३४वा। वानाओ२३४वा। षुदा५ध्रिषाइ।
४
ह्वो५इ। डा॥ १६ ॥

५र र र २ ३ ५
(सोमसाम ॥) ह्वावासोमस्वा। नोअद्रा२३४इभीः।
२ ३ ५ २ ५ २
तिरोवार२३४रा। णिया३१उवा२३। षा२३४या। जनो

मनुष्याय हितः "यः" च सोमः "अप्सु" वसतीवरीषु "अन्तर्" अरिचे धान्तर् "दधन्वान्" गच्छन् भवति। तं सोमम् "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार तं परिषिञ्चतेति समन्वयः ॥ २ ॥ ४६

* उ॰ ८, ३, १० १=ऋ॰ ७, ५, १३, ४=कच्छ॰ ४, १, ८।

नाऽ२३४पू। राइचाम्२३४वो। विश्वा३१उवा२३। व्हा-
२३४रीः। सदोवा२३४ने। षुदा३१उवा२३। घ्रो२३४
षे ॥ १७ ॥

आसोमस्वानोअद्रिभाइः। तिरोवाराणिआव्या१या
२। जनोनपुरिचाम्१वो२ः। विश्वाह्वा१रीरः। सदोव-
नाइ। षूरदध्रिषो२३४५इ। डा ॥ १८ ॥

आसोमस्वानोअद्रिभिः। तिरोवा३राणिअव्यया।
जनोनपुरिचमुवोविश्वह्वरिः। औ२। हुवाइ। होइवा।
सदोवनेषुदौ२। हुवाइ। होइवा। ध्रिषा। औ-
इहोवा। होपूइ। डा ॥ १९ ॥

हे "सोम!" "अद्रिभिः" ग्रावभिः "स्वानः" अभिषूयमा-
णस्त्वम् "अव्यया"* अविमयानि "वाराणि" वालानि पवि-
त्राणि "तिरस्" कुर्वन् व्यवधायकानि कुर्वाणः सन् "आ पवसे"
आभिमुख्येन क्षरसि। "हरिः" हरितवर्णः स सोमः चम्वो-

* इयाडियाजीकाराणामुपसंख्यानमिति कात्यायनवचनात् सिद्धम् (७,१,३९सू०)।

अथ चतुर्थी।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
प्रसोमदेववीतयेसिन्धुर्नपिप्येअर्णसा।
३ १र २र ३१र २र३ २ ३ १ २ ३ १ २
अꣳशोःपयसामदिरोनजागृविरच्छाकोशंमधुश्चुतं ॥४॥४८॥*

५ र २ २ ५
(त्रैणिधनमाग्नेयम्॥) प्रसोमदा। वावीता२३४याइ।
२ १ २ ५ २
सिन्धूर्नापाइप्यआ३१उवा२३। णा२३४सा। आꣳशोः-
३ ५ २र १ र २ ५
पा२३४या। सामदाइरोनजा३१उवा२३। गृ२३४वीः।
२ २ ५ २ ५
आच्छाको२३४शाम्। मधा३१उवा२३। श्च२३४ताम् ॥२०॥

३४र५ र ४ ५र ३
(अग्नेर्वैश्वानरस्य साम॥) प्रसोमदेववी। तयी२३४-
५ ३ ४ ३ ४ ५र २ ५ १ १ २
हाइ। सिन्धुर्नपिप्येअ। र्णसो२३४हाइ। आꣳशोओ२-

रधिषवणफलकयोरुपरि स्थिते कलशे† "विशत्" प्रविशति। तत्र दृष्टान्तः—"जनोन" यथा जनः "पुरि" पुरे प्रविशति। स त्वं वनेषु काष्ठनिर्मितेषु पात्रेषु‡ "सदः" स्थानं "दधिषे" "दधिषे"-इति, साम्न ऋचः पाठौ॥ ३ ॥ ४७

---

* उ० १, २, २०, १=ऋ० ७, ५, १४, १=आर० २, २, १५—१६=कठे १,२, १३;—६, २, १३;—८, १, १३;—९, २, १७—१८;—११, १, १७;—१४, १, १४;—१९, १, १२—१३—१४;—२१, २, १७;—२२, १,६=ऊह्ये ६, १, ५।

† 'स्थानभूतचर्मणि'-इति वि०।

‡ 'वनेषु उदकेषु' इति वि०।

३४बा । पार्याओ२३४वा । सामद्रिरानजा । गृ२३५ । वोईद्वाइ । आज्ञाओ२३४वा । कोर्गाओ२३४वा । मधूपुस्थ्-ताम् । द्दो५इ । डा ॥ २१ ॥

( हिद्धिङ्कारं वामदेव्यम् ॥ ) प्रसोमार२३देववीतयाइ । साइन्धुर्नपिप्येअर्णसा ऽ शोःपयसामद्रिरोनजौहाइ । जुम्मा२ गृ२३वोः । अक्षाकोशाम्मधौहोइ । जुम्मा२ । स्रुताम् । औ२३होवा । होऽ५इ । डा ॥ २२ ॥

( उत्सेधः ॥ ) प्रसोमदेववीतये । सिन्धुः । नपा३४-औहोवा । प्येअर्णसा२ । हा३१उवा२३ । ऊ३४पा । अ ऽ शोइःपया । औहोवाहाइ । सामद्रिरो । नजागृ विः । हा३१उवा२३ । ऊ३४पा । अक्षा३कोशम् । थोहोवा-हाइ । मधू३स्रू५ताई५ईम् । ऊ२३४५ ॥ २३ ॥

( निषेधः ॥ ) प्रसोमदाइवाईवीतयाइ । सिन्धूर्नपा-

अथ पञ्चमी।

१ २ ३ १ ३ २ ३१ १ २ ३ १ २
सोमउष्वाणःसोतृभिरधिष्णुभिरवीनाम्।

१२ १ १२ १ २ ४ ५ २
हु। प्यै अर्णसा २। इहा३। आ ओ३:पाया। हा-
२ ५ १ १ १ २२ १ २ १ २
हो२३४हा। सामदिरो। नजाग्र२३वीः। इहा३।
१ २ ४ ५ २ २ ५ ३ २ ४
आच्छा३काशाम्। हाहो२३४हा। मधू३श्चू५ताई५-
२ १ १ १ १
ईम्। हो२३४५॥ २४॥

हे "सोम!" त्वं "देववीतये" देवानां पानाय* तदर्थम् "अर्णसा" वसतीवर्याख्येनोदकेन "प्रपिप्ये" प्राप्यायसे। तत्र दृष्टान्तः—"सिन्धुः न" यथा सिन्धुरुदकेन प्रप्यायते तद्वत्† [प्यायतेः लिटि लिटाङ्गोश्चेति पीभावः] ततः स त्वं "मदिरः" मदकरः सुरादिरिव "जागृविः" जागरणशीलः‡ [यद्वा न सम्प्रत्यर्थे, इदानीं मदकरो जागरणशीलस्त्वं "अंशोः" लताखण्डस्य "पयसा" रसेन "मधुश्चुतं" मधुररसस्य धारयितारं "कोशं" द्रोणकलशं "अच्छ" अभि¶ गच्छसि॥ ४॥ ४८

---

* 'देववीतये देवतर्पणाय'-इति वि०।

† 'प्रपीप्ये प्रवर्द्धते पूर्यते वा'-इति वि०।

‡ 'जागृविः जागरणशीलः अप्रमत्तः'-इति वि०।

¶ 'अच्छ आप्तुम्'-इति वि०।

१ २　३ १ २　३ १ २　३ १ २　३ १ २
अश्वये*वहरितायातिधारयामन्द्रयायातिधारया ॥५॥४९†

(सोमसामानिषट् ॥) हाउसोमा । उच्चाणा३ सो
हु१भोर२ । आधिष्णुभिरवोरनाम् आश्वौ३हो । येवहरि-
तायाताइधा१राया२ । मन्द्राया३या३४ । हाओवा ।
तिधारया१२४५ ॥ २५ ॥

सोमऊ३वाणःसोहभाइः । आधिष्णुभिरवोनाम् ।
आश्वये२३४वा । हरितायातिधा१रा३या । मन्द्राया
२३४या । ता२३४इधा । रया । औ३होवा । हा५इ ।
डा ॥ २६ ॥

सोमउप्वाणःसोहभिः । ए५ । अधी । ष्णुभिरा३१-
उवा२३ । वो२३४नाम् । आ२३श्वा । येवहरितायातिधा-
३१उवा२३ । रा२३४या । मा२३द्रा । यायातिधा३१उवा-
२३ । रा२३४या ॥ २७ ॥

---

* 'अश्वया इव = अश्वया यथा शीघ्रं गच्छति, तद्वत् शीघ्रगामिन्या'-इति वि० ।

† उ० ३, २, १२, १=ऋ० ७, ५, १३, ३=ऊहे १, १, ५ —६—७—८ ;—
२०, १, १९—२० ;—२०, २, १—ऊह्ये ६, १, १—२—१७ ;—६, २, ६ ।

४र ५ र ४ ५र ५ ५ ४ ४ १ २ १ २र १
सामउष्वाणःसोटभिः। ए५। अधी। ष्णुभिरवीर। नाम्।
२र १ ० १ र २र १ २
आश्वयेव। हारिताया२। ताइधारया। मान्द्रयायौवा।
३ ५ २ १ ३ ४ ५ ४
तौर३४धा। रया। औ३होवा। हो५इ। डा॥ २८॥

४र ५ र ४ ५र ४ ५ ४ ५ ४२र
सोमउष्वाणःसोट। भाइ। अधिष्णुभिरवी। नाम्।
१ २ १ २ १ २र १ र २ १ र र
आधिष्णुभिरवीर। नाम्। अश्वयेवा। हरितायाता
२ ५ २ ३
२३इधा। रया२१उवा२३। मा२३४०द्रा। यायाती
५ २ २ २र ४ ५ ४
२३४धा। रयाऔहोवा। हो५इ। डा॥ २९॥

३र ४ र ३ ४र ५ ५ २ १
सोमउष्वाणःसोटभिः। औ३हो३इ। आ२३४।
५ ४ ५र १ २र र र १ २
धिष्णुभिरवीनाम्। आश्वयेवहरिताया। तिधारायौ।
३ ५ २ १ र १ २ ५
वाओ२३४वा। मन्द्रयायातीरधा। ऊ३म् ऊ३४३म्।
२ ५
ना२३४५योइहाइ॥ ३०॥ ४९

॥ इति ग्रामे गेये चतुर्दशः प्रपाठकः॥

"सोटभिः" पुष्णुद्भिः "स्वानः" सुवानोऽभिषूयमाणः "सोमः" "अवीनां स्नुभिः" [मांस्पृत्स्नूनामुपसंख्यानमिति वार्त्तिकेण सानुशब्दस्य स्नुभावः] समुच्छ्रितैर्वालैः पवित्रैरधियाति अधि

अथ षष्ठी ।

३ १ २ ३ १ २ ३ १ २
तवाहꣳसोमरारण*सख्यइन्दो दिवेदिवे ।
३ १ २ ३ १ २ ३ १र २र ३ २उ ३१ २
पुरूणि†बभ्रोनिचरन्तिमामवपरिधीꣳरतिताꣳइहि ॥६॥५०‡

४ र २ १
( वैष्णवम् ॥ ) ओं ॥ तवाहꣳसो । मरा २रणा ।
र १ र र र
रण। सख्यइन्दोदिवा २इ । दिवाइ । दिवे । पुरूणिबभ्रो-
१ र १
निचरन्तिमा २मवा । अव । परिधीꣳरतिताꣳ २इहा २३इ ।
१ २ ५र र २ ५
आ२इ । हा२३४ । औहोवा । ऊ३२३४पा ॥ १ ॥

४ ५र ४ २ १ र
( द्वितीयवैष्णवम् ॥ ) तवा । तवा । अहꣳसोम-

अधिकं गच्छन्ति । “ठ” इति प्रसिद्धौ । “अश्वयेव” बडवयेव हरितवर्णया धारया याति । “मन्द्रया¶” मदकारिण्या धारया द्रोणकलशमधि गच्छति ॥ “उष्वाणः” “उषुवाणः”—इति पाठौ ॥ ५ ॥ ४९

---

* ‘रारण रमयाथि। अथवा रणतिस्तुतिकर्मा मद स्तुति कुर्मः’-इति वि० ।

† ‘पुरूणि बहूनि दुःकृतानि । अथवा बहूनि यजमानकुलानि चरन्ति’-इति वि० ।

‡ उ० ३, १, ११, १ = ऋ० ७, ४, १५, ६ = ऊहे २, १, ९—१०—११ ;—९, १, १० ;—१३, २, १—२ ;—१६, २, १५-१६—१७—१८ ;—१९, २, १ ;—२०, १, १४—१५—१६ = ऊह्ये २, १, १६ ;—१, १, ४ ;—५, २, १३ ;—६, १, ११—१६ ।

¶ ‘मन्द्रया मदकरया’ इति वि० ।

रारण। सख्याई३०दो। दिवाऔ३हो। दाइवे२।
पुरूणिबभ्रो निचरन्तिमा१मा३वा। पराऔ३हो। धाइꣳ-
रतितो२३४वा। आ५इहोई६हाइ॥ २॥

(आङ्गिरसानित्रीणि॥) तवाहꣳसोमा६रारण।
साख्याई२३४०दो। दिवेदा२३४इवे। पुरूणिबभ्रो निच-
रन्तिमाम्। आवा२३४हाइ। पारीधाइꣳरा। तितो
२३४वा। आ५इहो६हाइ॥ ३॥

तवाहꣳसोमरौ। हो५रणा। साख्यइन्दो२।
दिवा४४५इ। दो२३४वे। पूरू२णाइवा२। भ्रोनिच-
रा२। तिमा३४५म्। आ२३४वा। पारी२धाइꣳ
रा२। तिताꣳ३४५। ई२३४हो॥ ४॥

तवाहꣳसोमरारण। सख्यइन्दोदिवेदिवाइ। सख्य
इन्दोदिवेदा२३इवे। पुरूणिबभ्रोनिचरन्तिमामा२३वा।

अथ सप्तमी।

३ १ २ ३ १र २र
मृज्यमानः सुहस्त्या * समुद्रे वाचमिन्वसि।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३क २र
रयिं पिशङ्गम्बहुलम्पुरुस्पृहम्पवमानाभ्यर्षसि॥ ७॥५१†

१ २ १ २ १
पराइ धार२३इ७ रा। तिता७२३इ हा३४३इ॥ ओ२३४५
इ। डा॥ ५॥

५ र २
(स्वारमौक्ष्णोरन्ध्रम्॥) मृज्यमानाः। सुहस्ति-

हे "इन्दो" सोम! तव "सख्ये" सखिकर्म्मणि अहं "दिवे दिवे" अन्वहं "रारण" रमे [रणेर्लिटि उत्तमे णलि रूपम् हि] "बभ्रो" बभ्रुवर्ण! सोम "पुरूणि" बहूनि रक्षांसि "मां" तव सख्ये स्थितं "न्यवचरन्ति" नीचीनं चरन्ति बाधन्ते। ये मां बाधन्ते तान् "परिधीन्" ‡ रक्षसाम् त्वम् "अतीहि" आगच्छ॥ ६॥ ५०

---

* "सुहस्त्य"-इति ऋ० ख०।

† उ० ४, १, १२, १ = ऋ० ७, ५, १६, १ = आर० ५, १, १२ = ऊह्य ३, २, १—२—३—४—५;—८, १, ४—६;—२०, २, ७—८;—ऊह्य ६, १, १९।

‡ 'परिधीन् अतीहि-ये अन्ये यजमानाः परिचरन्ति, तेभ्यः परिधीन् त्वरयाम् अतीत्य इहि मदीयं यज्ञमायाहि। अथवा दुःखानि ये कुर्वन्ति अतीत्य तेषां परिधीन् आयाहि'-इति वि०।

या३। सामू३द्राइवा। चमिन्वसा३इ। रायो३०पाइ-
शा। गम्बकृत्ला३म्। पूरु२स्पृ२३४हाम्। पवमा।
ना। औ३हो। भियो२३४वा। षा५सो६हाइ॥६॥

(औक्ष्णोरन्ध्रम्॥) मृज्यमानाः। सुहस्त्याया२।
समुद्रे वा। चामिन्वासा२३४इ। रया३४इंपिशा। गम्ब
कृत्लंपूरुस्पृहा२म्। पवा२३। मा२ना२३४औहोवा।
भिया२र्षसी२३४५॥७॥

मृज्यमानाः। सुह। स्तिया। सा१मू२द्राइवा२।
चमि। न्वसाइ। रा१यी२०पाइशा२। गंवकृत्लंपुरु।
स्पृहाम्। पा१वा२माना२३। भा२या२३४औहोवा।
षा२३४सी॥८॥

(आग्नेयानित्रीणि॥) मृज्या६इए। मानःसुहस्तिया
औ३हो। समुद्रेवाचमिन्वसाऔ३हो। रयिंपिशङ्ग बकृ

लंपुरुस्पृहाऔ३हो । पवमार३ना३ । भियोर३४वा ।
षा५सो६हाइ ॥ ८ ॥

मृज्यमानः सुहस्तेया । वाहाइ । समद्राइवा ।
चमोर२न्वार३४सी । रया३४इंपिशा । गंबहुलम् । पुरु-
स्पृहार३४म् । पवा३४माना३ । भियोर३४वा । षा
५सो ६हाइ ॥ १० ॥

मृज्यमाना५ःसुहस्तिया । समूर्द्राइवार । चमा-
रइंन्वासीर । रयिंपिशङ्गंबहुलंपुरुस्पृहाऔ३हो । पव
मार३ना३ । भियोर३४वा । षा५सो६हाइ ॥ ११ ॥

(ऐडमौक्षणोरन्ध्रम् ॥) मृज्यमानःसुहस्त्या । समु-
द्रेवावा । चामिन्वसि । रायिंपिशा३ । हा३हा ।
गंबहुलंपुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा
२३सा३४३इ । औ२३४५इ । डा ॥ १२ ॥

अथाष्टमी।

२ १र २र ३ २ ३ १२ ३ २ ३ १ २
अभिसोमास आयवःपवन्तेमद्यम्मदम्।

५ ४ ५र ४ १
(वाजजित्॥) मृज्यमानःसुहा। स्तिया२।

१ १ र १ २र १
सम्। २हो। द्रवा२हो। चामिन्वसाइ। रया२यिं

१ १ २१ १र १
घोइ। पिशा२ङ्गे। गंबहुलाम्। पुरुस्पृहाम्।

१ र १ २र १ २ २र
पवा२हो। माना२हो। भ्यर्षसा३१उवा२३। वा

१र २ २
जीजिगी३वा५१॥ १२॥

हे "सुहस्त्या" हस्ते भवा. हस्त्याः अङ्गुलयः,* शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानस्त्वं "समुद्रे" अन्तरिक्षे † कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि‡। किञ्च। हे पवमान पूयमान सोम! "पिशङ्गं" हिरण्यं रजतादिभिः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं धनं" "अभ्यर्षसि" स्तोतॄणामभिक्षरसि प्रयच्छसीत्यर्थः॥ ७॥ ५१

* "सुपांसु (७, १. ३९)"-इत्यादिना सुप आत्वे रूपम्।

† "समुद्रः"-इति अन्तरिक्षनामसु पञ्चदशं नैघण्टुकम् (१, ३)।

‡ "इन्वति"-इति गतिकर्मसु पञ्चदशाधिकशततमं नैघण्टुकम् (२. १४)। व्याप्तिकर्मसु च प्रथमम् (२, १८)। अतएव 'इन्वसि व्याप्नोषि'-इति वि०।

२ १र २र३१२ ३ १ २
समुद्रस्याधिविष्टपे मनीषिणो
३ १ २ ३ १ २
मत्सरासो मदच्युतः ॥८॥ ५२*

२ २ र र १ २
( वैश्वदेवे द्वे )। हाउहाइ। अभिसोमासाउआया-
२ २ र १ २
१वा२३ः । हाउहाइ। पवन्तेमदोउयांमा१दा२३म् ।
२ २ र र १ २
हाउहाइ । समुद्रस्याधिविष्टपेमाउनाइषा१इणा२३ः।
२ र र १ २ २ २
हाउहाइ। मत्सरासोमाउदाच्यू१ता२३ः। हाउहा-
१
३४३इ। ओ२३४५इ। डा॥ १४॥

४ ५ ४ ५ २ ५ ४ ५
आभीसोमा। सआ३१उवा२३। या२३४वाः। पाव
४ ५ २ ५ ४ ५ ४
न्ताइमा। दिया३१उवा२३। मा२३४दाम्। सामुद्र-
५ २ १ र२ २ ५ ४ ५
स्या। धिविष्टापेमना३१उवाये३। षो२३४णाः। मात्सा
४ ५ २ ५
रासाः। मदा३१उवा२३। च्यू२३४ताः॥ १५॥

* उ० २, २, ६, १ = ऋ० ७, ५, १४, ४ = ऊहे २, १, १४—१५ ;—४, २, ७—८—९—१०—११—१२ ;—७, १, १९ ;—७, २, १४—१५—१६ ; —८, १, १६; —८, २, १८ ;—९, २, १५ ;—९, ३, ६ ;—१२, १, ३ ;—१२, २, १६ ;—१४, १, ९ ; —१४, २, ५—७ ; = १६, २, २—३ ;—१८, २, २—३—१० ;—२२, २, १० = ऊह्ये १, १, ६ ;—१, २, ११ ; —२, २, ९ ;—४, १, १० ;—५, २, १० ;—६, १, ९—१४ ।

(इन्द्रसामनोद्वे।) अभिसो३मासआयवाः। पवन्ते
मदियम्म। दा। औ३हो। आऔ३हो। समुद्र-
स्याधिविष्टपेमनीषि। णा। औ३हो। आऔ३हो।
मत्सरासोमदच्यु। ता। औ३हो। आऔ३हो३४-
३। ओ२२३४५इ। डा॥१६॥

अभिसोमासआ। हो५यवाः। पवन्तेमद्यम्मदम्प-
वन्तेम। दिया७हो। मा२३दाम्। समुद्रस्याधिविष्ट-
पेमनीषिणाः। मनाहोइ। षा२३इणाः। मत्सरासोमद
च्युताः। मदाहोइ। च्यू२३ता३४३ः। ओ२३४५इ। डा।
॥१७॥

(स्वः पृष्ठम्॥) अभा२इसोमा३४। औहो५सआ-
यवाः। पवा२०तेमा३४। औहो५दियम्मदाम्। समू-
२द्रस्या३४। औहो५धिविष्टपाइ। ओये३। मा२ना२३४-

र र　　१　　५　　२　　५　　२　२र १
औहोवा। षीर२३४णाः। ऊर२३४पा। २। मत्सरासोर२३।
१　२　५र र　　२　५
मा२दार२३४औहोवा　च्यू२३४ताः॥ १८॥

४र ५र ४　　५ ४ र ५र
(इन्द्रसामानित्रीणि॥) औहोवा। अभिसोमास-
र ४ ५　४र ५र ४　१　२र १　४
आयवः। औहोवा। पवा२। तेमा२ओ५वा६५६। दि-
२ १ २　१　१ २　४　२ १ ३र र
यम्मदम्। समू२। द्रस्या३ओ५वा६५६। धिविष्टपेरमनी-
१ ३र　३ २　१र २　४
षिणा२ः। औ३हो३१इ। मत्सा२। रासा३ओ५वा६५६।
२ १ ३ १११र
मदच्यु ता२३४५ः॥ १९॥

५　र र र　५　१　२र २ ४
अभिसोमासआया६वाः। पवा२। तेमा२ओ५वा-
२ १ २　१　१ २ ४　२
६५६। दियम्मदम्। समू२। द्रस्या३ओ५वा६५६। धिवि-
१ ३र　र १ ३र　१　१र २ ४　२
ष्टपेरमनीषिणा२ः। मत्सा२। रासा३ओ५वा६५६। मद-
१ ३ ११११
च्य ता२३४५ः॥ २०॥

५ र र र　५　१　० १
अभिसोमासआया६वाः। पवन्ता६मा। दिया२'मा-

अथ नवमी।

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २

पुनानःसोमजागृविरव्यावारे*परिप्रियः।

१र २र ३ १

त्वंविप्रोअभवो†ङ्गिरस्तम

२ ३ १ २

मध्वायज्ञंमिमिक्षणः‡ ॥८॥ ५३¶

५ २ ३ १ २ १ २ ४ ५

२३४दाम्। समुद्रस्या। धिविष्टपाइ। मनाइइषाइणाः।

१ २र १ १ ३ ५र र ३ ५

मात्सरासोर३। मा२दा२३४औहोवा। च्यू२३४ताः॥२१॥५२

"आयवः"§ गमनशीलाः "सोमासः" सोमाः मद्यं" मदकरं मदं आत्मीयं रसं "अभिपवन्त:" अभितो निर्गमयन्ति। कुत्रेत्युच्यते—"समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रितपवित्रे। यद्वा। समुद्रस्य यस्मात्समुद्द्रवन्ति रसाः तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने "पवित्रे" निर्गमयन्ति। कीदृशाः? "मनीषिणः" मनसईशितारः "मत्सरासः" मदकराः "मदच्युतः" मदकरेण रसेन च्यावयितारः॥

"विष्टपे", "विष्टपि"—"मदच्युतः", "स्वर्विदः"—इति च पाठौ॥ ८॥ ५२

* "अव्योवारे"-इति
† "वोङ्गिरस्तमो"-इति,
‡ "भिक्षनः"-इति च
} ऋ०।

¶ ऋ० ७, ५, १३, १।

§ 'आयवः मनुष्याः'-इति वि०। 'आयवः'-इति मनुष्यनामसु सप्तदशं नैघण्टुकम् (२. ३)।

अथ दशमी ।

१ २ ३ २ ३ १ २ ३ १ २ ३ २
इन्द्रायपवतेमदःसोमोमरुत्वतेसुतः ।

५ र ४ ५र ४र ५ ४ १रर
(सोमसाम ॥) पुनानःसोमजागृविरव्याः । वारैःपा-
७ १ र र १ २
रिप्रिया२ः । त्वंविप्रोअभवोङ्गाइरा२३४ । स्तमा३ ।
१ २र १ १ ३ ५र र ३ ५
माध्वायज्ञा२३म् । मा२इमा२३४औहोवा । ज्ञा२३४णाः ।
॥ २२ ॥ ५३

हे सोम! "जागृविः" जागरणशीलः "प्रियः" प्रीणयिता* त्वं "पुनानः" पूयमानः सन् "अव्याः" मेष्याः "वारैः" वालैर्निर्मिते दशापवित्रे परिक्षरसि। "अङ्गिरस्तम" हे अङ्गिरसां वरिष्ठ! "विप्रः" मेधावी त्वं पितॄणां नेता "अभवः"† भवसि। स त्वं "नः" अस्मदीयं "यज्ञं" "मध्वा"‡ मधुना आत्मीयेन रसेन "मिमिक्ष"§ सेक्तुमिच्छसि। मिहेः सेचनार्थस्य (भ्वा० प०) सनि रूपम् ॥ ८ ॥ ५३

---

* 'प्रियः प्रियतरः, भूतानां प्रियः'-इति वि० ।

† 'सार्वकालिकोलङ् (३, ४, ६)।

‡ सुप आत्वे रूपम् (७, १, ३९)।

§ 'मिमिक्ष मिक्ष' इति वि० ।

३ १ २ ३ १र २र ३
सहस्रधारोअत्यव्यमर्षति
१ २ ३ १ २
तमीम्मृजन्त्यायवः ॥ १० ॥५४*

५ र २ १ १र र
इन्द्रायपा। वता२इमादा२ः। सोमोमरुत्वता२इ-
१ १ २र १ १
ह्वता२ः। स। हास्रधारः। अतिअव्यमा२र्षाती२।
१ १ २ १
तमा२इमार्जा२। तिआयार३वा३४३ः। ओ२३४५इ।
डा ॥ २३ ॥

५ र २ र १
(स्वःपृष्ठमाङ्गिरसम् ॥) इन्द्रायपा। वतेमदाः।
२र र १ १ १ १ २र
सोमोमाह्व२। त्वतेह्वो२इ। ह्वता२ः। स। हास्रधारः।
१ २ ३ ५ ३ ५ १
अतिअव्यमा। षाताओ२३४वा। ऊ२३४पा। तमीह्वो-
१ १र २ १
२इ। मार्जा२। तिआया२३वा३४३ः। ओ२३४५इ।
डा ॥ २४ ॥

५ र २ ४ ५ ४ ५ १र र
(सोमसाम ॥) इन्द्राया३पावताइमदाः। सोमोम-
२ २ १ २र १ २
रुत्वता१इह्व३ताः। स। हास्रधारः। अतिअव्यमा३।

* ऋ० ७, ५, २१, ८

अथैकादशी ।

१२ ३१ २३ १र २र ३ १ २
पवस्ववाजसातमोभिविश्वानिवार्य्या ।
१ २३१ २३१र २र
त्वꣳसमुद्रःप्रथमविधर्म
३१२ ३२
न्देवेभ्यःसोममत्सरः ॥ ११ ॥५५ *

४ ५ २१ २ २ ४ ५ १ ३ ५र र
षाती । तमाऔ३होइ । मार्जा । तार्या२३४औहो
३ ५
वा । या२३४वाः ॥ २५ ॥

४ ५ र ४र ३ ५ २ १ २र
पवस्ववाजसा । इहा । ता२३४माः । अभिविश्वा-
१ २र १ ३ ५र र १ २ १र ३
निवारिया । त्वꣳसा२मू२३४औहोवा । द्रःप्रथमेविधर्म-
२ २ १ ३ ५र र २ ३
न् । दाइवाये३ । भ्या२:सो२३४औहोवा । ममत्स-
२
रा६ः ॥ २६ ॥ ५४

"मदः" मदकरः "सुतः" अभिषुतः "सोमः" "मरुत्वते" मरुद्भिस्तद्वते "इन्द्राय" इन्द्रार्थं "पवते" क्षरति । ततः "सहस्रधारः" बहुधारोपेतः सोमः "अव्यम्" अविमयं पवित्रम् "अत्यर्षति" अतिगच्छति तमिमं "आयवः" मनुष्या ऋत्विजः "मृजन्ति" शोधयन्ति ॥ १० ॥ ५४

* ऋ० ७, ४, १६, ३ ।

अथ द्वादशी।

१ २ ३ २३१ ३१ २

पवमानाअसृक्षतपवित्रमतिधारया।

३१ २ ३१ २ ३ १२ २२

मरुत्वन्तोमत्सराइन्द्रियाहया

३२ ३ १२

मेधामभिप्रियाᳬसिच ॥१२॥५६*

॥ इति तृतीय-दशति ॥

४५ २ २ ४ १ २

(पवित्रम् ॥) पवमानाअसृक्षतपवाइ। त्रामतिधार

हे "सोम!" "विश्वानि" सर्वाणि "वार्या" वरणीयानि स्तोत्राणि† "अभि" लक्ष्य "वाजसातमः" अतिशयेनान्नस्य लम्भकस्त्वं "पवस्व" चर। हे सोम! "देवेभ्यः" देवानां‡ "मत्सरः" मदकरः "समुद्रः" समुन्दनशीलः¶ "विधर्मन्" विशेषेण पोषक!॥ त्वं "प्रथमे" मुख्ये श्रेष्ठे यज्ञे देवेभ्यस्तदर्थं चर॥

"विधर्मन्"-"विधारयम्"-इति, "वाजसातये"-"वाजसातमः"-इति, "वार्य्या"-"काव्या"-इति च क्रमेण साम्नऋचः पाठाः॥ ११॥ ५५

---

* ऋ० ७, ५, १६, ५।

† 'वार्या वरणीयेन उदकेन' इति वि०।

‡ "षष्ठ्यर्थे चतुर्थीति वाच्यम्"—इति का० (पा० २, ३, ६२)॥

¶ "समुनत्तीतिवा" इत्यादि निरुक्तोक्तेः (२, १०)। 'समुद्रः समुद्रसंस्थानीयः' इति वि०।

॥ "विधर्मन्=विधर्मणि, विविधकर्मणि कर्मकारणे देवे' इति वि०।

१　　२　२ २　२　　१　　२
यामरुत्वन्तोमत्सराइन्द्रो३याः। ह्याः। मा२३इधाम्।
१　२　१　३　५र र　३　५
अभाये३। प्रा२या२३४औहोवा। सी२३४चा॥ २७ ॥५६

"पवमानाः" पूयमानाः सोमाः "धारया" आत्मीयया "पवित्रम्"* "अति" अतीत्य "असृक्षत" सृज्यन्ते। कीदृशाः? "मरुत्वन्तः" मरुद्भिर्युक्ताः "मत्सराः" मदकराः "इन्द्रियाः" इन्द्रजुष्टाः। "मेधां"† स्तुतिं "प्रियांसि" अन्नानि च "अभि" लक्ष्य स्तोतृभ्य उभयं कर्त्तुं वा "ह्या" यज्ञे गन्तारः सृज्यन्ते॥१२॥५६

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य पञ्चमखण्डः॥ ५ ॥

॥ इति बार्हतम् ॥

---

* "पवित्रं पुनातेः। मन्त्रः पवित्रमुच्यते। 'येन देवाः पवित्रेणात्मानं पुनते सदे' त्यपि निगमो भवति॥ रश्मयः पवित्रमुच्यन्ते। 'गभस्तिपूतो नृभिरद्रिभिः सुत' इत्यपि निगमो भवति॥ आपः पवित्रमुच्यते। 'शतपवित्राः स्वधया मदन्ती' बहूदकाः॥' अग्निः पवित्रमुच्यते। वायुः पवित्रमुच्यते। सोमः पवित्रमुच्यते। सूर्यः पवित्र-मुच्यते। इन्द्रः पवित्रमुच्यते। 'अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्र पवित्रं ते मा पुनन्तु' इत्यपि निगमो भवति" इति (नि॰ ५, ६)।

† 'मेधां प्रज्ञाम्'-इति वि॰।

अथ षष्ठेखण्डे—

सैषा प्रथमा।

१र २र३१२३२ ३ १२ ३१ १ ३ २३१र २र
प्रतुद्रवपरिकोशंनिषीदनृभिःपुनानोअभिवाजमर्ष।
३ १ २३ १ २३२३१ २ ३
अश्वंनत्वावाजिनंमर्जयन्तोच्छा।
१ २ ३ १ २
बर्हीरशनाभिर्नयन्ति॥ १ ॥ ५७ *

२ ३५ ३२ २१
(अशनम्॥) ओइप्रतु। इहा३१। द्रवा। परि
२ २ ३ ४ ५ २ ३ ५ ३ २ २ १
को३। शन्निषीदा। औइनृभिः। इहा३१। पुना।
२ १ २ ३ ४५ २ ३ ४ ३ २ २ १
नो३अभि। वाजमर्षा। ओअश्वम्। इहा३१। नत्वा।
२ १ २ ३ ४ ५ २ ३ ५ ३ २ २ १
वा३जिनम्। मर्जयन्ताः। ओअच्छ। इहा३१। बर्हीइः।
१ र २ २ ४
रशना। भा३४३इः। ना३या५न्ताई५६इ॥ २८॥

४ ५ ४ ५ २ १ २ १
(वृषौशनं साम॥) प्रतु। एप्रतू। द्रवा। द्रवा।
२ २ ३ ४ ५ ४ ५ ४ ५ २ १
परिको३। शन्निषीदा। नृभिः। एनृभिः। पुना।
२ १ २ १ २ ३ ४ ५ ४ ५ ४ ५
पुना। नो३अभि। वाजमर्षा। अश्वम्। एअश्वाम्।
२१ २१ २ १ २ ३ ४ ५ ४ ५ ४ ५
नत्वा। नत्वा। वा३जिनम्। मर्जयताः। अच्छ। एअच्छा।

* उ० १, १, १०, १=ऋ० ९, ३, २२, १=कहे १, १, ४—१९, १, ७।

२ १ २ १ २ १२ २ ३२ ५ ५
बर्हाइः। बर्हाइः। रशनाभिः। नये३४। धियाइहा-
३ १११११
उवा। ता२३४५इ ॥ २९ ॥

४ ५ ४ १ २
(जानस्याभीवर्तौहौ ॥) प्रतुद्रा। वापरिकोशाम्।
२ २ १ २ ३२ २ ३२ ५ २ १
निषीइद्रा। साइद्रा। औहोइ। औहो३वा। नृभिः
२२ ७ २ १ २ ३२ २
पुनानोअभिवा। जमार२३र्षा। आर्षा। औहोइ।
३२ ५ २ १ २ २ ७
औहो३वा। अश्वन्नत्वावाजिनम्मा। जया२३न्ताः।
१ २ ३२ २ ३२ ५ २ १२ २ १ २
यांता। औहोइ। औहो३वा। अक्काबर्हाइः। रश-
१२ २ ३२ ५ ५ ३ ११११
नाभिः। नये३४। धियाइहाउवा। ता२३४५इ ॥ ३० ॥

५२ ५ ३ २ ५ ५ २ १
हाओईहा। उऊवा३४। ओईहा। प्रतुद्रवा।
२ २ ३ ४ ५ २ १ २ १ २ १
परिकोश। शन्निषीदा। नृभाइःपुना। नोअभि।
२ ३ ४ ५ २ १ २ १ २ ३ ४ ५
वाजमर्षा। अश्वन्नत्वा। वा३जिनम्। भर्जयन्ताः।
२ ५ ३ २ ५ ५ २ १२ २ १
हाओईहा। उऊवा३४। ओईहा। अक्काबर्हाइः।
२ १ २ २ २ ४
रशना। भा२४३इः। नाइया५०ता६५६इ ॥ ३१ ॥

४५ १ र
(त्रिष्टुबौशनम्॥) प्रानू। द्रवापरिकोशाम्।
२ २ १ २१ २ १ २३४५
निषी२दा। नृभाइःपुना। नो३अभि। वाजमर्षा।
१ र र ७ २ १र २ र
अश्वन्नत्वावाजिनम्मा। जयार२३॰ताः। अच्छावर्हीइः।
२१र २ २ ४
रशना। भा२४३इः। ना३या५॰ताई५ई॥ २२॥ ५७

उशनाऋषिः*। हे सोम! "नु" क्षिप्रं † "प्रद्रव" प्रगच्छ आगत्य च "कोशं" द्रोणकलशं परिनिषीद" निषण्णो भव। "नृभिः" नेतृभिः "पुनानः" पूयमानः "वाजम्" अन्नं यजमानार्थमुद्दिश्य "अभ्यर्ष" [वाजं सङ्ग्रामं वा] "वाजिन" बलवन्तं "अश्वं न" अश्वमिव तं यथामार्जयन्ति तद्वत् ताम् "अर्जयन्तः" शोधयन्तः "बर्हिः" यज्ञम् अच्छ "प्रतिरशनाभिः" रशनावद्रायताभिरङ्गुलीभिः "नयन्ति" अध्वर्युप्रमुखाः॥ १॥ ५७

---

* "काव्यः"-इति ऋषि मे०।

† 'अच्छ आप्तुम्'-इति वि०। मन्त्रश्रुतौ 'अच्छा'-इति दीर्घो निपातत्वात् (६, ३, १३६ पा०।)

‡ 'रशना यूपयोजनी'-इति वि०।

¶ "नु-इत्येषोऽनेककर्मा, इदन्नु करिष्यतीति हेत्वपदेशे, कथन्नु करिष्यतीत्यनुपृष्टे, नन्वेतदकार्षीरिति चाप्युपमार्थे भवति वृक्षस्य नु ते पुरुहूतवयाः वृक्षस्येव ते पुरुहूत शाखाः"-इत्यादि नि० १, ४। "नु"-इति क्षिप्रनामसु च प्रथममेव पठितम् (२, १५)।

§ 'बर्हिः प्रस्तरम्'-इति वि०।

‖ 'रशनाः'-इति अङ्गुलिनामसु षष्ठमेव पठितम्।

अथ द्वितीया ।

१　 १२ ३ १ २　 ३ २ ३ २ ३ १ २ १ २
प्रकाव्यमुशनेव ब्रुवाणोदेवोदेवानांजनिमाविवक्ति ।
१ २ ३ १　 २　 ३ २
महिव्रतःशुचिबन्धुःपावकः
३ १ २ ३ २ ३क २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥ २ ॥ ५८*

४८　 १र　 १
( वाजसनीद्वे ॥ ) प्रा । कावियाऽ३म् । उशनेवाऽ३ ।
१　 २　 १र र　 १र　 १
ब्रुवा२३णाः । देवोदेवाऽ३ । नाञ्जनिमाऽ३ । विवा-
२　 १　 १　 १　 १
२३क्तो । महिव्राताऽ३ः । शुचिबन्धूऽ३ः । पवा२३काः ।
१ र　 १र　 ३ २　 ५र र　 ३
पदावाराऽ३ । होअभियार३इ । तिरा३४औहोवा । भा
१ १ १ १
२३४५न् ॥ २३ ॥

१ र　 १　 १　 १र र
प्रकावियाऽ३म् । उशनेवाऽ३ । ब्रुवाणाऽ३ः । देवो
१र　 १　 १
देवाऽ३ः । नाञ्जनिमाऽ३ । विवाक्तोऽ३ । महिव्राताऽ३ः ।
१　 १　 १ र　 १
शुचिबन्धूऽ३ । पवाकाऽ३ः । पदावाराऽ३ । होऽ३ ।
१ १　 ५र र　 १ १र ३ १ १ १ १
भिया३४औहोवा । तिरेभा२३४५न् ॥ २४ ॥

---

* ऋ० ४, २, १, १= ऋ० ७, ४, १२, २=अष्टे ६, २, ५ ;— १६, २, १९ ;— २१, २, ३—६ ।

२ र र १ २ १
(वाजजित्साम॥) प्रकाव्यमुशनेवब्रू३वाणो। देर-
५ २र र र र १ २ ३ ५ १
३४वाः। देवानाञ्जनिमावी३वाक्ती। मा३३४ही। व्रतः
१ २ ३ ५ २ र र र १
शुचिबन्धुः पा३वाकः। पा२३४दा। वराहोअभ्येतिरा-
२ १ १ १ १
२३। हाउवा३। भा२३४५न्॥ ३५॥

५र र १ २ १र
(वाराहम्॥) हाउहाउ। ऊप्। प्रकावियाम्।
२ १ र २ ३ ४ ५ २र१र र २ १ २ ३
उशने। वब्रुवाणाः। देवोदेवा। ना३०जनि। मावि
४ ५ २ १ २ २ ३ ४ ५ र
वक्ती। महिव्रताः। शुचिवा३। धुःपवाकाः। हाउ
र १ २ १र २ १ २
हाउ। ऊप्। पदावरा। हो३अभि। आ३४३इ।
२ ४
ती३रा५इभा६५६न्॥ ३६॥

॥ इति पञ्चदशस्याद्धः प्रपाठकः॥

वृषगणो वासितऋषिः*। "उशने एव" तन्नामकऋषि-
रिव "काव्य" कविकर्म स्तोत्रं "ब्रुवाणः" "देवः" स्तोता †

---

* "वृषगणो वासिष्ठः"-इति ऋषि- मै०।

† 'देवः सोमः'-इति वि०।

अयमृषिर्वृषगणोनाम "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि* "प्रविवक्ति" प्रकर्षेण वदति। [ वच परिभाषणे (अदा०प०)। व्यत्ययेन विकरणस्य श्लुः (३,१,८५) बहुलं छन्दसीति (७,४,७८) अभ्यासस्य इत्वम् ] "महिव्रतः प्रभूतकर्मा†। "शुचिवन्धुः" बध्नन्ति शत्रूणिति बन्धूनि तेजांसि बलानि वा दीप्ततेजस्कः‡ "पावकः" पापानां शोधकः "वराहः" वरञ्च तदहश्च वराहः [ "राजाहःसखिभ्यष्टच्"-इति टच् समासान्तः। तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान्। अर्शआदित्वान्मत्वर्थीयोऽच् ] तादृशः¶ सोमः "रेभन्" शब्दं कुर्वन्§ "पदानि" स्थानानि पात्राणि "अभ्येति" अभिगच्छति। यद्वा। यद्वा कश्चन वराहः "पदा" पदेन भूमिं विक्रियमाणः शब्दं करोति तद्वत्॥ २॥ ५८

---

* 'जन्मानि कर्माणि वा'-इति वि०।

† 'महिव्रतः महतः कर्मणः अन्नस्य वा धारयिता' इति वि०।

‡ 'शुचिबन्धुः शोभनबन्धुः शुद्धबन्धुर्वा'-इति वि०।

¶ 'वराहः सोमः'-इति वि०। "वराहो मेघो भवति वराहारः। वरमाहारमाहार्षीरिति च ब्राह्मणम्। विध्यद्वराहन्तिरोअद्रिमस्तेत्यपि निगमो भवति। अयमपीतरो वराह एतस्मादेव। वृहति मूलानि वरं वरं मूलं वृहतीति वा। वराहमिन्द्र एमुषमित्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते 'ब्रह्मणस्पति वृषभिर्वराहैः। अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते—'पश्यन् हिरण्यचक्रानयो दंष्ट्रान् विधावतो वराहून्"-इति नि० ५, ४।

§ 'रेभन् स्तुवन्' इति वि०।

अथ तृतीया।

३ १र २र ३ १र ३र ३ १ २ ३ १र २र ३ २
तिस्रोवाचईरयतिप्रवह्निर्ऋतस्यधीतिंब्रह्मणोमनीषाम्।
१ २ ३ १ २ ३ १ २ ३
गावोयन्तिगोपतिंपृच्छमानाः
१ २ ३ १ ३ २
सोमंयन्तिमतयोवावशानाः॥ ३ ॥ ५९ *

(संक्रोशास्त्रयः॥) हाउ। हा। हाउहाउ।
तिस्रोवाचा। ईरय। तिप्रवह्नीः। हाउया२३हाउ।
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। आ। हाउया२३हाउ।
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। हाउहा। इहाउहा।
औ३हो३१इ। इहा। तिस्रोवाचाः। ई३रय। तिप्रवह्नीः।
होइया। इयोइया। औ३हो३१इ। इया। तिस्रोवाचाः।
ई३रय। तिप्रवह्नीः॥ १ ॥

(वेणोर्विशाले द्वे॥) इहोइह। इहोइहा३हो।
वाहोइह। तिस्रोवाचाः। ई३रय। तिपवह्नीः। इहो

* उ० २,२,१०,१=ऋ० ७,४,१७,४=जहे २,१,१७=ऊह्यो ३,२,६।

२ १ २ ५ ४ ४
वा५। इ हेवार३। ई३४हहाइ। ई५। इहा।
२ १र र २ १ २ ३ ४ ५ २ १
तिस्रोवाचाः। ई३रय। तिप्रवक्नीः। इ हेवार३।
२ ५ ४ २ १र र २ १ २ ३
ई३४हहाइ। इहा। तिस्रोवाचाः। ई३४रय। तिप्र-
४ ५ १ २ २ १ २ २ ५र र
वक्नीः। आऔ३हो। आऔ३हो३४। औहोवा।
२ १ १र र २ १ २ ३ ४ ५ १
हा३हाइ। तिस्रोवाचाः। ई३रय। तिप्रवक्नीः। आ।
२ र र २ ३र ४र ५ २ १र र २
औ३होवाहा३४। औहोवा। तिस्रोवाचाः। ई३
१ २ ३ ४ ५
रय। तिप्रवक्नीः॥ २॥

२र २ ४ ५ ४ २ २ १ २ १
ओ हो३। आहाओहा। ऋतस्यधाइ। तौ३०ब्रह्म।
२ ३ ४ ५ १ २ १ २ ३र २ १ २र १र
णामनीषाम्। हहहोइ। हहहाहहो३। गावोयन्ताइ।
२ १ २ ३ ४ ५ १ २ १ २ ३र २ १
गो३पतिम्। पृच्छमानाः। इहहोइ। इहहाहहोइ।
२र १ २ १ २ २ ४
सोमंयन्ताइ। मतयः। वा३४३। वा३शा५ना६५६ः॥
॥ ३॥ ५८

१ ५ख,

पराशरऋषिः*। "वह्निः" वोढा यजमानः "तिस्रो वाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं† "ब्रह्मणः"‡ परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याण-वाचं च प्रेरयति। किञ्च। "गोपतिं" ¶ वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः" "पृच्छमानाः" पृच्छन्त्यः सत्यो "यन्ति" स्व-पयसा माश्रयितु मभिगच्छन्ति। तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारः§ "सोमं" "यन्ति" स्तोतु मभिगच्छन्ति‖ ॥ २ ॥ ५९

* "शाक्त्यः"-इति ऋषि-नै०। "पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवति। इन्द्रोऽपि पराशर उच्यते परा-शातयिता यातूनाम् इन्द्रो यातूना मभवत् पराशर इत्यपि निगमो भवति"-इति नि० नै०६,३०॥

† 'धीतिं कर्म'-इति वि०।

‡ 'ब्रह्मणो मनीषां वेदोक्तानि कर्माणि'-इति वि०।

¶ 'गोपतिं यजमानं दक्षिणासम्बन्धेन पृच्छमाना इव, वृषभं वा' इति वि०।

§ मतय इति स्तोतृनामसु न दृश्यते परं मेधावि-नामसु द्वाविंशतितमत्वेन पठ्यत्कमिति लभ्यते (३,१५)। 'मतयः बुद्धयः'-इति वि०।

‖ यास्कव्याख्यानन्त्वित्थम्—"वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्वमक्षरमधीत्यधिदैवतम् अथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमता मृतस्यात्मनः कर्माणि ब्रह्मणो मतान्ययमेवैतत् सर्वमनुभवत्यात्मगति माचष्टे"-इति (प०१,१४)॥ विवरणकारस्तु पूर्वं यथावत् व्याख्यायानन्तरमपरमपि व्याख्यानजालमाविस्तृतवान् तद्यथा—'यद्यपि पावमानीषु सोममुक्त्वा अन्या देवता न सम्भवति तथापुष्टाद्ये व्याख्यातेति कृत्वा तेनापि व्याख्यानानुस्मरणार्थं मालिख्यते। तिस्रो वाचः। ऋग्यजुःसामानि अथवा तिस्रो वाचः सत्त्वरजस्तमांसि अथवा जाग्रत्स्वप्नसुषुप्ति-इत्ययः। ईरयति प्रेरयति उदकरश्मीन् वहतीति वह्निरादित्यः। ऋतस्य आदित्यस्य

अथ चतुर्थी।

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषाहेमनापूयमानोदेवोदेवेभिःसमपृक्तरसम्।
३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
सुतःपवित्रम्पर्येतिरेभन्मितेवसद्मपशुमन्तिहोता॥४॥६०॥*

३ २ ३र ४र ५ १र २
(अगस्त्यस्य यमिके द्वे ॥) अस्या३४औहोवा। प्रेषा। हे३
१ र २ ३ ४ ५ ३ २ ४ २ ३र ४र ५
मना। पूयमानाः। उहुवाइ। अस्या३४औहोवा।
१र २ १ र २ ३ ४ ५ २
प्रेषा। हे३मना। पूयमानाः। हाइ। उहुवा।
३र २ ३र ४र ५ १र २ १ २ ३ ४ ५
देवा३४औहोवा। देवाइ। भी३ःसम। पृक्तरसाम्।

---

धीतिः। अथवा ऋतस्य सत्यस्य ब्रह्मणः। अथवा ऋतस्य धीति यज्ञस्य वा आदित्यस्य वा हृय इव 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते'। 'ब्रह्मणो मनीषां गावः रश्मयः तेन विसृष्टा अथवा उदकानि। एतमेव गोपति रश्मि-स्वामिनं वा पृच्छन्त इव सोमं यन्ति पृथिवीं वसाना सर्वोपकाराय सोमं आदित्यं मतयः। प्रज्ञायते विषयाः अतिप्रकाश्यत इति रश्मयः। वावशाना आदित्यं यन्ति प्रविशन्ति। अध्यात्मेऽग्निरात्मा भवति। वक्ष्यादिगुणसंयोगात्। सः तिस्रो वाचः प्रेरयति। तिस्रः वाचः बुद्धिमनांसि। विद्या महान्। बुद्धिरहङ्कारं मनइति प्राधान्याद् भूतेन्द्रियाणि ऋतस्यात्मनः धीतिं मनसः इष्टानि कर्माणि प्रेरयन्ति ब्रह्मणः आत्मनः। गोपाः गोपायति। आत्मानं इन्द्रियाणि स्वामिनं पृच्छमानाः। आत्मानं तदभिप्रायेण शब्दाद्यनुगमनात्। एतमेवसात्मानं सोमङ्कामयमाना इव यन्ति न भूयः तदर्थं प्रादुर्भवन्ति'-इति।

* ऊ० ६, २, ८, १ = ऋ० ७, ४, ११, १ = जह६'२। ७,

२ २ १ २ ३र ४र ५ १ २ १
हाउ। होइ। सुता३४औहोवा। पवाइ। चा३म्परि।
२ ३ ४ ५ २ र २ १ ३र ४र ५ १
एतिरेभान्। हा। हाऔहोइ। मिता३४औहोवा। वसा।
२ १ २ ३ ४ ५ १ २ २ ४
झा३पशु। मन्तिहोता। पशु। मा३४३। ती३होपु

ताई५६ ॥ ४ ॥

१र २र ३र २ १ ३ २ १ र १ २र
औहोवाहा३होइ। इहा। अस्यप्रेषा। हे३मना।
२ ३ ४ ५ २र १र र २ १ २ ३ ४ ५
पूयमानाः। देवोदेवाइ। भौ३ःसम। पृक्तरसाम्।
२ १ २ १ २ ३ ४ ५ १र २र ३र २
सुतःपवाइ। चा३म्परि। एतिरेभान्। औहोवाहा-
१ ३ २ १र २ १ २
३होइ। इहा। मितवसा। झा३पशू। मा३४३।
२ ४
ती३होपुताई५६ ॥ ५ ॥ ६०

वसिष्ठऋषिः*। "अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः (भ्वा०प०) क्विपि रूपं। सावेकाच इति विभक्तेरुदात्तत्वं † प्रेषा] प्रेरकेण‡ "हेमना"¶ हिरण्येन "पूयमानः" हिरण्य-

* "मैत्रावरुणः"-इति ऋषि-नि०।

† "सावेकाचस्तृतीयादिर्विभक्तिः"-इति पा० ६, १, १६८।

‡ 'प्रेषा प्रकर्षेच्छया'—इति वि०।

¶ बाहुलकाद्गलोपाभावः।

अथ पञ्चमी।

१ २　　　३ १ २ ३　१ २ ३ १　३ १ २　३ १ २ १ २
सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
७　१र　२र ३ १र　२र　३ १ २　३ १र　२र
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः॥५॥६१*

२र　र　र　१
(कालकाक्रन्दौ॥) सोमः पवते जनितामा२ता३इना २म्।
र　र　र　१　　　१२र　र
जनिता दिवो जनिता पृ३थाइव्या २ः। जनिनाग्नेर्जनिता सू।

पाणिरभिषुणोतीति हिरण्यसम्बन्धः। तादृशः "देवा" दीप्यमानः अंशुः "रसम्" आत्मीयं "देवेभिः" देवैः सह† "समपृक्त" सम्पर्कयति संयोजयति। [पृची सम्पर्के (अदा० आ० ] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्म्मितं‡ "पर्य्येति" परिगच्छति। कथमिव? "होता" देवाना माह्वाता¶ ऋत्विक् "मितेव" निर्म्मातेव§ "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्य्येति तद्वत्॥ ४ ॥ ६०

---

* उ० ३, १, १८, १ = ऋ० ७, ४, ६, ५ = जहे ३, २, १९ ;—८, २, १ ;—१२, १, १०—१६।

† 'देवेभिः देवेभ्यः वस्त्रादिभ्यः'-इति वि०।

‡ दशापवित्रमित्यर्थः।

¶ होतेति ह्वेञोरूपम् (६, १, ३४ पा०)।

§ 'मिता कर्त्ता' इति वि०।

७ २ १र २ १ २ २
रियार३स्या। जनितेन्द्रा। स्या३जनि। ता३४३। ता२
४
वा५इष्णो६५६ः॥ ६॥

३ ४ ५ र र २ २ ४ १
सोमःपवतेजनिता। ए३। औ३हो५वाऽ। माता
२ १र २ १र २ १र २ १र
२३४५इना६५६म्। जनितादिवोजनितापृथिव्याः। जना-
३ ५ २ र २ ४
ऽइता२३४ग्नेः। जनिता। सू३४३। री३या५स्या६५६।
२ १र २ १र २ १ १ १ १
जनितेन्द्रस्यजनितोतविष्णो२३४५ः॥ ७॥

५र ४ ४ ५
(जनित्रे द्वे॥) हाउजनत्। ३। जनद्धाउ। ३।
१ १ २र १ १
होइ। जनत्। २। होइ। जनात्। सोमःपवा। ते३
१ २ ३ ४ ५ १ १र २ १ २ १
जनि। तामतीनाम्। जनितादाइ। वो३जनि। तापृ
५ ५ २ १र २ १ र २ ३ ४ ५ ५र
थिव्याः। जनिताग्नाइः। जनिता। सूरियस्या। हाउ
४ ४ ५ १
जनत्। ३। जनद्धाउ। ३। होइ। जनत्। २। होइ।
१र २ २ २ ४
जनात्। जनितेन्द्रा। स्या३जनि। ता३४३। ता३वा।
५इष्णो६५६ः॥ ८॥

४ ५ ४ ५ १
जनद्वाउ। ३। जनदाउ। ३। जनत्। हाइ। ३।
२र १ २ १ २ ३ ४ ५ २ १र
सोमःपवा। ते३जनि। तामतीनाम्। जनितादाइ।
२ १ २ ३ ४ ५ २ १र २१र२ ३ ४ ५
वो३जनि। तापृथिव्याः। जनिताग्नाइ। जनितासूरियस्या।
४ ५ ४ ५ १ र २
जनद्वाउ। ३। जनदाउ। ३। जनत्। होयि। ३। जनि-
१ र २ १ २ २ ४
तेन्द्रा। स्या३जनि। तो३४३। ता३वाप्रयिष्णो६५६ः

॥ ९ ॥ ६१

प्रतर्दनऋषिः*। "सोमः" अभिषूयमाणः "पवते" पात्रेषु क्षरति। कीदृशः? "मतीनां" बुद्धीनां। यद्वा। मननीयानां स्तुतीनां "जनिता" जनयिता† ["जनिता मन्त्रे" (६,४,५३) इति निपातेन णि-लोपः] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता। तथा "पृथिव्याः जनिता"। "अग्नेः" "जनिता"

---

* "दैवोदासिः"-इति वि०।

† अत्रेदं विवरणम्—'सोमः पवते। विनियोगोऽस्य चतुर्थेऽहनि। अधियज्ञपक्षे पर्णसोमस्य पृथिव्यादीनां। जनयितृत्वेन सम्भवात्। यज्ञद्वारेण स्थितिहेतुत्वात् जनयतीति जनिता मतीनां जनयिता दिवः जनयिताग्नेर्जनयिता सूर्यस्य जनयिता। इन्द्रस्य जनयिता। उत अपि विष्णोर्व्याप्तिमत इति। जनयिता पृथिव्यादिभ्यः रसेन वर्द्धयिता। अधिदैवेनेन्द्रः सोमः यदात्मनि तदायमर्थः। सर्वमिदं श्रयति। आत्मा सोमः पवते साधयति भोक्तृत्वात्। आत्मा सत्कारणं वा। प्रधानभूतेन्द्रियाणां जनयिता पृथिव्यादीनाञ्च द्योर्वर्णमान्तरिक्षस्यापि अग्न्यादीनाञ्च स्थानानां तिसृणां विष्णोश्च व्याप्तिमतः॥"

अथ षष्ठी ।

३१ २३१र २र ३ १ २ ३ १२ ३ १ २
अभित्रिपृष्ठंवृषणंवयोधामङ्गोषिण*मवावशन्तवाणीः ।
३१२ ३ १ १ ३ २उ ३ १२३ १२ ३१ २
वनावसानोवरुणोनसिन्धु†र्विरत्नधादयतेवार्याणि ॥ ६॥६२॥‡

२ २ ऽ २ ७र २
(अङ्गिरसां व्रतोपोहः ॥) ओ३हायि । ओ३हा । ओहा ।
१ ऽ २ २ १ २ १ २३
इया२ । ओ३हा३ए । अभित्रिपा । ष्ठा३०वृष । णंव-
४ ५ २ १र २ १र २ ३ ४ ५
योधाम् । अङ्गोषिणाम् । अवाव । शन्तवाणीः ।
२१र २ १ ० ३ ४ ५ २ १ १ २
वनावसा । नो३वरुणोनसिन्धूः । ओ३हायि । ओ३-
ऽर २ १ ऽर २ २ १
हा । ओहा । इया२ । ओ३हा३ए । विरत्नधाः ।
२ १ र २ २ ४ ५
दयते । वा३४३ । रो३या५णाई५ईयि ॥ १० ॥ ६२

प्रकाशयिता । 'सूर्य्यस्य" सर्व्वप्रेरकस्यादित्यस्य "जनिता" "इन्द्रस्य" जनिता पानेन मदस्य जनयिता । "उत" अपि च । "विष्णोः" व्यापकस्य "जनिता" जनयिता¶ । एतत्सर्वं सोमेऽभिषूयमाणे भवति सोमेन हि देवताप्यायन्तइति ॥ ५ ॥ ६१

---

* "आङ्गूषाणाम्"-इति,
† "सिन्धून्"-इति च　} ऋ० ।

‡ उ० ६, २, ११, १=ऋ० ७, ३, २१, २ = कहे ७, २, १७ ।

¶ तथाह यास्कः—"सोमः पवते सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाशकर्मणा मादित्यरश्मीनां दिवो द्योतनकर्मणा मादित्यरश्मीनां पृथिव्याः प्रथनकर्मणा

अथ सप्तमी ।

१ २　 ३ १ २ ३ १र २र ३ १ २ ३ १र २र　 १ २
अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य गोपाः*।

वसिष्ठ ऋषिः†। "त्रिपृष्ठं" त्रीणि पृष्ठानि द्रोणकलशादि-स्थानानि सवनानि वा यस्य स तथोक्तस्तम्। "वृषणं" वर्षकम्। "वयोधाम्" अन्नस्य दातारम्‡। "अङ्गोषिणं" आघोषन्तं सोमं¶ "वाणीः" स्तोत्ररूपा वाचः "अवावशन्त" कामयन्ते शब्दायन्ते वा। "वना" वनानि उदकानि "वसानः"। आच्छादयन् "वरुणो न" वरुण इव§ "सिन्धुः" अपां स्यन्दयिता पर्यन्तप्रदेशानाच्छादयति तद्वत्। "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि‖ "दयते" स्तोतृभ्यः प्रयच्छति ॥ ६ ॥ ६२

---

मादित्यरश्मीनां, सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनां, विष्णोर्व्याप्तिकर्मणा मादित्य-रश्मीनामित्यधिदैवतम्। अथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः। अपिवा सर्वाभिर्विभूतिभिर्विभूतत आत्मेत्यात्मगति माचष्टे"—इति प० २, १२।

* "भुवनस्य राजा"—इति ऋ०।

† "मैत्रावरुणः"—इति ऋषि-मै०।

‡ "सुतः", "सुतं", "वयः"-इति त्रीण्यपि पदानि पाठभेदात् सप्तमषष्ठकत्वेन श्रयन्ते (२, ७)। 'वयोधा मन्नानां धातारं यशस्विनं वा'—इति वि०।

¶ "आङ्गूषस्तोमआघोषः "एनाङ्गूषेण वयमिन्द्रवन्तः" अनेन स्तोमेन वयमिन्द्र-वन्तः"—इत्यादि नि० ५, ११।

§ "वरुणः वृणोतीति सतः"—इत्यादि नि० १०, ३—४।

‖ 'वार्याणि वननीयानि धनानि'—इति वि०।

१ २ ३ २ ३ २ १ १ ३ १ १ ३ १ र २ र १ १ र
वृषापवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे स्वानो*-
२र
अद्रिः ॥ ७ ॥ ६३†

२ १ १ २र १ २ १र २ १
(सम्यावैयश्वम् ॥) हो। होपि। अक्रांत्समुद्रः प्रथमे विधामान्।
१ २ १ २ १ २ र १ १ १ र
होहोयि। जनयन् प्रजा भुवनस्य गोपाः। हो। होयि वृ
२र १ २र १ २ १र र५ १ २ १
षापवित्रे अधिसाने २ अ। व्यायि। हो। चो। बृह
र र ७ र र र १र र २ र र २
त्सोमो २ वावृधे स्वाने ३ अ। द्रा। औ३। होवाहाउवा
२ २र १र १ १ १ १
३। ए३। स्वानाअ। द्रीर३४५ः॥ ११ ॥ ६२

पराशरऋषिः‡। "समुद्रः" अस्मादापः सन्द्रवन्ति स समुद्रः अपां वर्षकः। "गोपाः" यज्ञस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुवनस्य" उदकस्य¶ "विधर्म्मन्" विधारकेऽन्तरिक्षे "प्रजाः" "जनयन्" उत्पादयन् "अक्रान्" सर्व्वमतिक्रामति [क्रमते-र्लुङि, तिपि, इड़भावे वृद्धौ च कृतायां सिज्लोपे मकारस्य

* "सुवाम"—इति क्व०।

† उ० ५, २, १, १=ऋ० ७, ४, १८, प= ऋचे १०, २, १;—१२, २, ५— ८—९; ऋचे६, २, ५।

‡ "शाक्तः"—इति ऋषि-मे०।

¶ "भुवनम्"-इति उदकनामसु पञ्चाशत्तमं नैघण्टुकम् (१,१२)।

अथाष्टमी ।

१ २　३ २ ३ १ २ ३ १ २ ३ २ ३ १ ३　३ १ २　३ १
कनिक्रन्ति हरिरासृज्यमानः सीदन्वनस्य जठरे पुनानः ।
१ २ ३ १ ३　३ २ ३ १ २　२ ३ १ २　३ १ २
नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः ॥ ८ ॥ ६४ *

मोनोधातोरिति नकारे रूपम्] "वृषा" कामानां वर्षिता "स्वानः" अभिषूयमाणः † ॥

"अद्रिः"-"इन्दुः" इति च साम्नृचः पाठौ ॥ ७ ॥ ६३

---

* ऋ० ७, ४, ५, १ ।

† अत्रेदं विवरणम्—

"अक्रान् समुद्रः विनियोगोऽस्य नवमेऽहनि, क्रान्तत्वात् प्रथमे परमे उत्कृष्टे विधर्मणि धारणेन जनयन् प्रजाः प्रजायन्त इति प्रजाः देवाः याः भुवनस्य गोपाः भूतानां रक्षिता वृषा सन्ना पवित्रे वा समाय । अधि उपरि सानो समुच्छ्रयन्तो अव्ये अविमये । बृहत् सोम वावृधे वर्द्धते स्वानः अद्रिः अदरणः । अथः अक्रान् समुद्रः सामर्थ्यात् अत्यक्रमीत् अतीतं गच्छत्युदयादस्तं सदा समुद्रः । आदित्यः प्रथमे प्रकृष्टे व्योमन् सामर्थ्यादन्तरिक्षे प्रजा जनयन् वर्षकर्मणा । भुवनस्य त्रैलोक्यस्य गोपा रक्षिता वृषा वर्षणशीलः । पवित्रे व्याप्तिमये अधिसानः अभिषिच्यमाणः सौम्यैः । वावृधे वर्द्धते बृहदिति बृहद्विशेषणम् । स्वानः सुतः अद्रिरादित्य अदरणः अत्यक्रामत् अधिष्ठितवान् । समुद्रः आत्मा अभिद्रवत् तं भूतानि परमेभ्यः धने भूतेन्द्रियमिश्रशरीरे जनयन् ज्ञानकर्मणा बोध्य मुत्पादयन् प्रजा वर्द्धयन् । भुवनस्य गोप्ता प्रकाशरूपत्वात् । वृषा पवित्रे सत्यमये आत्मा वर्षिता भवति शरीररूपेण पवित्रे ज्ञानमये अवतेर्गत्यर्थः । गत्यर्थास्तु बुद्ध्यर्थाः । अधिसानो सम्बध्यमान-शब्दादिषु महत्त्वे सुष्ठु वर्षितं पवित्रे । प्रवः अद्रिः अदरणः"—इति ॥

यास्कस्त्वेवं व्याख्यातवान्—"अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यधिदैवतम् । अथाध्यात्मम् अत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधि सानो अव्ये महत्सोमो वावृधे सुवान इन्दुरित्यात्मगतिमाचष्टे"—इति प० २,१६ ।

४ ५ १ १ २ १
(सामसामनि द्वे॥) क्रानी। क्रान्तो२क्रान्तो२। हरिरासृज्य-
२ ४ ५ १ २ १ २
मा२३ना३ः। सायिदान्। वाना२वाना२। स्यजठरेपुना२३-
२ ४ ५ १ १ २ १ २
ना३ः। द्रभीः। याता२याता२ः। कृण्वतेनिरिर्णिजा२३-
२ ४ ५ १ १ १ १ १
गा३म्। आताः। माती२म्माती२म्। जनयता२३स्वा२स्वा
५ २ २ ३ १ १ १ १
२३४ओहावा। भो२३४५ः ॥ १२ ॥
३ ४ ५ २ २ २ २ १ २ २ ५
कनिक्रन्तिहा। होयि। हरिरासृज्य। मा२३४ना।
२ २ १ २ २ २ १ २ २ २ १
हाहोयि। सोदन्वनस्यजठरेपुना२३नाः। हाहोयि। नृभि
२ २ १ १ २ १ २
र्यतःकृण्वतेनिर्णिजा२३ङ्गाम्। हाहोयि। अतोमतायिम्
७ १ ३ ५ २ २ ३ १ १ १ १
जनयता२३। स्वा२धा२३४औहोवा। भो२३४५ः ॥ १३ ॥ ६४

प्रस्कण्वऋषिः*। "सृज्यमानः" आ समन्तादिसृज्यमानो-ऽभिषूयमाणः† "हरिः" हरितवर्णः सोमः "कनिक्रन्ति" पुनः पुनः शब्दायते [क्रन्दतेर्यङ्लुकि, तिपि, इडभावे, "दाधर्त्तिदर्धर्ती त्यादिना‡ निपातनादभ्यासस्य निगागमः। अभ्यस्तस्वरः¶ ]

* "काण्वः"-इति ऋषि-मै०।

† 'सृज्यमानः संस्तूयमानः'-इति वि०।

‡ "दाधर्त्ति दर्दर्त्ति दर्दर्षि बोभूतु तेतिक्ते ऽलर्ष्यापनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदद् भरिभ्रद् दविध्वतो दविद्युतत् तरित्रतः सरीसृपतं वरीवृजन् मर्मृज्यागनीगन्तीति च" —इति पा० ७, ४, ६५।

¶ "अभ्यस्तानामादिः"-इति पा० ६, १, १८९।

अथ नवमी।

३ २उ ३ १ २ ३ १ ३ १ ३ २ ३ १ २ ३ १ २

एषस्यतेमधुमाँइन्द्रसोमोवृषावृष्णःपरिपवित्रे अक्षाः।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ उ ३क २र

सहस्रदाःशतदाभूरिदावाशश्वत्तमम्बर्हिरावाज्यस्थात्॥९॥६५*

४ ५ ४ ५ ३ २ ४ ५ र ४र ५

(ऐषम्॥) एषाएषाः। स्यता३१२३४यि। मधुमाँइन्द्रसोमः।

र ३ २ ५ ४ ५र र

वृषावृषाइए। वृष्णो३१२३४ः। परिवित्रे अक्षाः। सहस्रद्रा

५ ३ १ ५ ४र ५ ४र ५र ५

इए। स्रदा३१२३४ः। शतदाभूरिदावा। शश्वच्छश्वाइदे।

२ २ र ५र ४ ५ ५ ५

तमा३१२३४म्। बर्हिरावाजिपे। ह्वियाइह्वाउवा स्था२

१ १ १ १

२३४५त्॥ १४॥ ६५

तथा "पुनानः" पूयमानः "वनस्य" वननीयस्य चास्य द्रोण-कलशस्य "जठरे" "सीदन्" उपविशन् शब्दायते। किञ्च "नृभिः" कर्म्मनेतृभिर्ऋत्विग्भिः "यतः" संयतः सोमः "गाः" गो-विकारान् क्षीरादीन् आच्छादयन् "निर्णिजं" शुद्धम् आत्मनोरूपं† "कृणुते" ग्रहादिषु करोति। अतोऽस्मै सोमाय "मतिं" मननीयां स्तुतिं "स्वधाभिः" हविर्भिः सह "जनयत" स्तोतारोऽजनयन् [झस्यान्तादेशाभावः छान्दसः। अदादेशः] यद्वा हे स्तोतारः अस्मै सोमाय स्तुतिं जनयत उत्पादयत कुरुतेति यावत्॥ ८॥ ६४

* ऋ० ७, ३, २१, ४।

† "निर्णिक्"-इति रूपनामसु प्रथमं नैघण्टुकम् (३, ७)।

अथ दशमी।

१ २ ३ १ २ ३ १ ३ १र २र ३ २ ३ २ ३ १ २
पवस्वसोममधुमाꣳऋतावापोवसानोअधिसानोअव्ये।

३ १ २ ३ १ २ ३ १ १ ३ १ २ १
अवद्रोणानिघृतवन्ति*रोहमदिन्तमोमत्सरइन्द्र-

१ २
पानः ॥ १० ॥ ६६†

॥ इति चतुर्थ-दशति ॥ ४ ॥

उशनाऋषिः‡। हे इन्द्र! "वृष्णः" वर्षकस्य "ते" तुभ्यं [चतुर्थ्यर्थे षष्ठी¶] "एषः" "स्यः§" स सोमः "मधुमान्" माधुर्योपेतः "वृषा" वर्षकः "पवित्रे" "पर्यक्षाः" पर्यस्रवत् [क्षरतेर्लुङि रूपम्] स एव "सहस्रदाः" सहस्रसङ्ख्याकस्य धनस्य दाता „शतदाः" शतसङ्ख्याकस्य दाता "भूरिदावा"‖ ततोऽपि भूरेर्दाता 'वाजी' बलवान् सोमः "शश्वत्तमम्" अतिशयेन पुराणं "बर्हिः" यज्ञम् "अस्थात्" अधितिष्ठति ॥

"वृषा वृष्णः"–"वृषा वृष्ण"—इति, "सहस्रसाः"-"शतसाः" इति च साम्नऋचः पाठाः ॥ ८ ॥ ६५

---

* "घृतवान्ति"—इति ऋ०।

† ऋ० ७, ४, ८, ३।

‡ "काव्यः"—इति ऋषि-मै०।

¶ "षष्ठ्यर्थे चतुर्थीति वाच्यम् ( २, ३, ६२ )"—इति कात्यायनवचनादित्यर्थः।

§ "स्यश्छन्दसि बहुलम् (पा० ६, १, १३३)"--इतीह नञ्सं स्य इत्यस्य सोर्लोपः।

‖ "आतोमनिन्क्वनिब्वनिपश्च ( पा० ३, २, ७४ )"—इति वनिपि रूपम्।

२ ३ ५ ३ २
(माधुच्छन्दसम्॥) हाओ२३४हाइ। इहा३१।
२१ २ १ २ ३ ४ ५ २ १र
पवस्वसो। मा२मधु। मा२ऽऽक्तावा। अपोवसा।
२ १ २ ३र ४ ५ २ १ र २ १
नो३अधि। सानोअव्याइ। अवद्रोणा। नी३घृत।
२ ३ ४ २ २ ३ ५ ३ २ २ १
वन्तिरोहा। हाओ२३४हाइ। इहा३१। मदिन्तमो।
२ १ २ २ ४
मत्सरः। आ२३४३इ। द्रा२पा५ना६५६ः॥ १५॥ ६६

प्रतर्दनऋषिः*। हे "सोम!" "मधुमान्" [मत्वर्थीयः] तादृशस्त्वं "अपः" वसतीवरीः एकधनाः "वसानः" आच्छादयन् "अधि" अधिकं "सानौ" समुच्छ्रिते "अव्ये" अविभवे-पवित्रे "पवस्व" चर। ततः "मदिन्तमः" अतिशयेन मदकरः "इन्द्रपानः" इन्द्रेण पातव्यः "मत्सरः" मादयिता सोमः "घृतवन्ति" उदकवतः† "द्रोणानि" द्रोणकलशान् "अवरोह" प्रादुर्भवसि॥

"रोह"-"सीद"—इति पाठौ॥ १०॥६६

इति श्रीमत्सायणार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य षष्ठः खण्डः॥ ६॥

---

* "दैवोदासिः"—इति ऋषि-नि०।

† "घृतम्"—इत्युदकनामसु दशमं नैघण्टुकम् (१, १२)।

अथ सप्तमे खण्डे--

सैषा प्रथमा ।

१२ ३ २र ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रसेनानीः शूरो अग्रे रथानाङ्गव्यन्नेति हर्षते अस्य सेना ।
३ २ ३ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
भद्रान्कृण्वन्निन्द्रहवांत्सखिभ्य आ सोमो वस्त्रा रभसानि-
दत्ते ॥ १ ॥ ६७*

२ ५ २ ५
( कुत्सस्याधिरथीयानि त्रीणि ॥ ) हो४वा । उहुवा
४ ५ २ १र २र १ र र २ २ ३ ४
३ । होवा । प्रसेनानाइः । शूरोआ२ । अग्राइरथा
५ २ १ २र १ २ २ ३ ४ ५ २ १र
नाम् । गव्यन्नेताइ । हर्षता३इ । अस्यसेना । भद्रा
१ १ २ ३ ४ ५ २र १र २र १
न्कृण्वान् । इन्द्रहा३ । वांत्सखिभ्याः । आसोमोवा ।
२ १ २र ३ ४ ५ ३ ५ ३ २ ४
स्त्रा३रभ । सानिदत्ताइ । हो४वा । उहुवा२ । हो
५ ५
वा६ । हाउवा ॥ १६ ॥

५र ४ २ १११ २ १र २र १ र र २ २
औहो२वा३४५ । प्रसेनानाइः । शूरोआ३ । अग्राइ
३४ ५ २ १ २र १ २ २ ३ ४ ५
रथानाम् । गव्यन्नेताइ । हर्षता३इ । अस्यसेना ।
२ १र २ १ १ २ ३ ४ ५ र ४
भद्रान्कृण्वान् । इन्द्रहा३ । वांत्सखिभ्याः । औहो२

* ऋ० ७, ४, ६, १ ।

२ ११२　　१२ १२ २२ १　　२ १　　२　　२
वा३४५ । आसोमोवा । स्वा३रभ । सा३४३ । नी३

४
दा५त्ता६५६इ ॥ १७ ॥

५र४　२ १११　　३ र२र १　　र र २　　२
औहो३वा३४५ । प्रसेनानाइः । शूरोआ३ । ग्राइ

३ ४ ५　　३　२र १　　२　　२ ३ ४ ५
रथानाम् । गव्यन्नेताइ । हर्षता३इ । अस्यसेना ।

३ र　२ १　　१　　२ ३४ ५　　र ४ २
भद्रान्कृण्वान् । इन्द्रहा३ । वांत्सखिभ्याः । औहो३वा

१११　३र र २र १　२ १　२　२ ४
३४५ । आसोमोवा । स्वा३रभ । सा३४३ । नी३दा५ ।

५ १११
ता२३४५इ ॥ १८ ॥ ६७

प्रतर्दनऋषिः* । "सेनानीः" सेनाना मग्रे नेता । "शूरः" शत्रूणां बाधकः "सोमः" "गव्यन्"† इच्छन् यजमानानां पश्वा-दिक मृच्छन् "रथानाम्" "अग्रे" पुरतः "प्रेति" प्रकर्षेण सङ्ग्रा-मङ्गच्छति । "अस्य" सोमस्य "सेना" च "हर्षते" हृष्यति [वाक्य-भेदादनिघातः] किञ्च "सखिभ्यः" समानख्यानेभ्यो यजमा-नेभ्यः "इन्द्रहवान्" तैः कृतानि इन्द्रस्य आह्वानानि "भद्रान्" कल्याणानि यथार्थानि "कृण्वन्" । आहूतो हीन्द्रः सोमं पीत्वा

---

* "दैवोदासिः"—इति ऋषि-नै० ।

† "छन्दसि परेच्छाया मपि क्यच् वक्तव्यः"—इति तृतीयाध्यायीय-कात्यायन-वचनादिह क्यचि रूपम् ।

अथ द्वितीया।

२ ३ २ ३ १ २ १ २ ३ २ ३ १ ३ १ २ ३ २
प्रते धारा मधुमतीरसृग्रन्वारयत्पूतो अत्येष्यव्यम्।
१ २ ३ १ २ ३ १ ३ १ २ ३ २ ३ १ २ ३ २
पवमान पवसे धाम गोनाञ्जनयंत्सूर्यमपिन्वो अर्कैः॥२॥६८*

(वैयश्वज्योतिषाणि त्रीणि॥) २र र २
हाउहोवा३हाइ।
र र र १ ७ १ १ १ १ २र र २
प्रते धारा मधुमा३ताइरसृग्रा२३४५न्। हाउहोवा४हाइ।
र २र र १ ७ १ १ १ १ २र र
वारंयत्पूतो अती३याइषि आव्या२३४५म्। हाउहोवा३
२ र ५र १ ७ १ १ १ १ २र र
हाइ। पवमानपवसे३धामगोना२३४५म्। हाउहोवा

कामान् प्रयच्छतीति। "रभसानि" इन्द्रस्य वेगेनागमन-निमित्तानि "वस्त्रा" वस्त्राण्याच्छादकानि पयःप्रभृतीन्याश्रयणानि "आ दत्ते" आ गृह्णाति †॥ १ ॥ ६७

---

* ऋ० ७, ४, १०, १।

† अत्र विवरणं यथा—"प्रसेनानी। सेनां नयति इति सेनानीः। शूरः विक्रान्तः। अग्रे रथानां ये देवरथाः गव्यम् इच्छन्। धर्म पृथिव्यां भवं प्रैति प्रयाति। हर्षन्ति अस्य सेना भद्रान् भन्दनीयानि। कुर्वन् हवनम्। इन्द्रहवान् इन्द्रियाणि। सखिभ्यः ऋत्विग्भ्यः। एवं गुणविशिष्टः। सोमः वस्त्राणि रभसानि पतन्ति। आदत्ते परसैन्येभ्यः। अथवा सेनानीः स्कन्दः शूरः विक्रान्तः। अग्रे पुरतः देवरथानां गव्यम्। पृथिव्यां भवन्धनम्। राति गृह्णाति ददाति सैन्येभ्यः सोमइव रश्मीन् वस्त्राणि सैन्येभ्यो ददाति॥"—इति॥

अथ तृतीया।

१ २ ३क २र ३ १र २र ३ १र २र
प्रगायताभ्यर्चामदेवांत्सोमꣳहिनोतमहतेधनाय।
३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ १र
स्वादुःपवतामतिवारमव्यमासीदतुकलशन्देवइन्दुः॥३॥६९*

२ र १ ७र १ १ १ १ २र
इहाइ। जनयंत्सूर्यमाइपाइन्वोअर्क्काइ३४५इः। हाउ
र २ १ १ १ १
होवाइहाउ। वा३४५॥१९॥६८

पराशरऋषिः†। तदा प्रसृज्यन्ते "यद्" यदा "पूतः" वसतीवरीभिस्त्वं "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि" अतीत्य गच्छसि। किञ्च हे "पवमान" शोध्यमान सोम! "गोनां‡" गवां¶ "धाम" धीयते पीयत इति धाम पयः तत् वसनीकृत्य "पवसे" चरसि। ततः "जनयन्" जायमानस्त्वं "अर्कः" अर्चनीयैः स्व-तेजोभिः "सूर्यम्" आदित्यम् "अपिन्वः" पूरयसि॥

"वारं यत्पूतोअत्येष्यव्यम्"--"वारान्यत्पूतो अत्येष्यव्यान्"—इति, "जनयन्"-"जज्ञानः"—इति च साम्नऋचः पाठौ॥ २॥ ६८

* ऋ० ७, ४, ११, ४।

† "शाक्त्यः"—इति ऋषि-नं०।

‡ "गोः पादान्ते (७, १, ५७)"—इति सिद्धं गोनामिति।

¶ 'गवां रश्मीनां मदकाणां वा'—इति वि०।

२ १र २ १ १ २ ३ ४ ५ २र १
प्रगायता। अभिय। चामदेवान्। सोमᳬ-

२ १ २ ३ ४ ५ २र १ २
हिनो। ता३मह। तेधनाया। स्वादुःपवा। ता३

१ २ ३ ४ ५ २र १र २ १ २
मति। वा२मव्याम्। आसीदतु। कलशम्। दा-

२ ४
३४३इ। वा२आ५इन्दूई५ई:॥ २०॥ ६९

इन्द्रप्रमतिर्वासिष्ठऋषिः। हे स्तोतारः! "प्रगायत" 'सोमं' प्रकर्षेणाभिष्टुत। वयन्तु "देवान्" "अभ्यर्चामः" अभिष्टुमः*। यद्वा। देवानभ्यर्चामोऽभ्यर्चत [पुरुष-व्यत्ययः]। किञ्च। "महते" महत् प्रभूतं धनाय धनं प्राप्तुं सोमं "हिनोत"† अभिषवार्थं प्रेरयत [क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः (२,३,१४,)-इति धन-शब्दस्य चतुर्थी] ततः "स्वादुः" मधुरः सोमः "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अतिपवताम्" अतीत्य चरतु। "देवः" द्योतमानः। सोमः "इन्दुः" दीप्तः सन् "कलशं" द्रोणम् "अति आसीदतु" आभिमुख्येन तिष्ठतु॥

"पवतां"-"पवाते"—इति, "देवइन्दुः"-"देवयुर्न"—इति साम्नऋचः पाठौ॥ ३॥ ६९

---

* 'स्तोतरश्चैव'—इति वि०।

† "तप्तनप्तनथनाश्च (७, १, ४५. पा०)"—इति तपि थिद्द हिनोतेति।

अथ चतुर्थी ।

१ २ ३ १ २ ३ १र २र ३ २ ३ १र २र ३ १ २
प्रहिन्वानोजनितारोदस्योरथोनवाज७ँसनिषन्नयासीत् ।
३ १ ३ १ २ ३ १ २ ३ २ ३ २३ १ २ ३ १
इन्द्रङ्गच्छन्नायुधास७ँशिशानोविश्वावसुहस्तयोराद-
२
धानः ॥ ४ ॥७०*

२र र २ र र र १ ३र ५र
हाउहोवा२हाइ । प्रहिन्वानोजनितारो३४३दसीयोः ।
२र र २ र र २ ३र ५र
हाउहोवा२हाइ । रथोनवाज७ँमनिषा३४३नयासीत् ।
२र र २ र र २ ३र ५
हाउहोवा२हाइ । इन्द्रङ्गच्छन्नायुधासा३४३७ँषिशानः ।
२र र २ र र २ ३र ५ ४
हाउहोवा२हाइ । विश्वावसुहस्तयोरा३४३दधानः । दधा

५नाउ । वा ॥ २१ ॥ ७०

वसिष्ठऋषिः† । "प्रहिन्वानः" अध्वर्युभिः प्रेर्यमाणः‡ "जनिता"¶ उत्पादयिता "रोदस्योः" द्यावापृथिव्योः§ तयो-र्जनयितृत्वं वृष्टिप्रदान-हविः-प्रापणाभ्याम् । तादृक सोमो "वाजम्" अन्नं "सनिष्यन्" दास्यन् ‖ "प्रायासीत्" प्रगच्छति ।

---

* ऋ० ७, ३, २९, १ ।　　　† "मित्रावरुणः"—इति ऋषि-मं० ।

‡ 'प्रीणानः गच्छन् वा'—इति वि० ।

¶ "जनिता मन्त्रे (६,४,५३)"—इति पा० ।

§ "रोदसी"—इति द्यावापृथिवी-नामसु चतुर्थं मं षण्ढकम् (३, ३० )।

‖ 'सनिष्यन् सम्भजमानः'—इति वि० ।

अथ पञ्चमी।

३ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २ ३ १र २र
तन्नूव्यदीमनसोवेनतोवाग्ज्येष्ठस्यधर्मन्द्युक्षोरनीके।
१ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ २ ३ १ २
आदीमायन्वरमावावशानाजुष्टम्पतिङ्कलशेगावइन्दुम्॥७१

(वाचःसामनी द्वे)॥ तन्नूव्यदी। होर२३४५इ। मन-
सोविनतः। वार२३४५क्। ज्येष्ठस्यधा। होर२३४५।
मन्द्युक्षोरनी। कार२३४५इ। आदीमायन्। होर२३४५इ।
वरमावावशा। नार२३४५ः। जुष्टम्पतिम्। होर२३३५इ।
कलशेगा५वः। इ। डाउ। वा॥ २२॥

तन्नूव्यदा३१२३४इ। मनसोविनतः। वार२३४५क्।
ज्येष्ठस्यधा३१२३४। मन्द्युक्षोरनी। कार२३४५इ। आदा-

"इन्द्रङ्गच्छन्" प्राप्नुवन् "आयुधा" "आयुधानि" "संशिशानः" सम्यक् तीक्ष्णीकुर्व्वन् इन्द्रं सहायगमनार्थं तीक्ष्णायुधः सन् "विश्वा"† सर्व्वाणि "वसु"‡ वसूनि धनानि "हस्तयोरादधानः" अस्मभ्यन्दानाय एवं कुर्व्वन् प्रायासीत्॥ ४॥ ७०

* ऋ० ७, ४, १५, १।

†,‡ 'विश्वा'—इति सुप आले, 'वसु'—इति सुपो लुकि च रूपम् (७, १, ३९)।

२　　　　　　　　१४ ३२ ४२५ २　　५ ११११　　२१
इमाया३१२३४न् । वरमावावशा । ना२३४५ः । जुष्ट-

२　　　　　　　　२
म्पता३१२३४इम् । कलशोगा५वः । इ । दा७ । वा ।

॥ २३ ॥ ७१

मृडीको वासिष्ठऋषिः । "वेनतः" [ वेनो वेनतेः कान्तिकर्म्मणः ( दे, ४, ३८ )"—इति यास्कः ] कामयमानस्य "मनसः" [ मनो मन्यतेः स्तुतिकर्म्मणः*] स्तोतुः "वाक्" स्तुतिलक्षणा† यद्येनं "तक्षत्" संस्करोति‡ । "धर्म्मन्" धारके¶ यज्ञे "ज्येष्ठस्य" प्रशस्यस्य "द्युक्षोः" दीप्त-स्तुतिकस्य [द्युक्ष शब्दे(अ०प०)इत्यस्मात् कु-प्रत्ययः ] सवनस्य "अनीके" प्रमुखे यदा यज्ञेषु सवन-मुखे स्तोतुर्वाक् सोमं स्तौतीत्यर्थः । "आ"अनन्तरमेव "वरं" वरणीयं "जुष्टं" देवानां मदाय पर्य्याप्तं "पतिं" सर्वस्य पालकं "कलशे" स्थितं "इन्दुम्" "ईम्" एनं सोमं "वावशानाः" कामयमानाः "गावः" "आयन्" पयसा स्वीयेन मिश्रयितु मागच्छन्ति ॥

"धर्म्मन्"-"धर्म्मणि"—इति पाठौ ॥ ५ ॥ ७१

---

* "मन्यते"—इति स्तुति-कर्मसु षट्विंशत्मे पण्टकम् ( ३, १४ ) ।

† 'वाक सखित्वम्'—इति वि० ।

‡ 'सक्षत करोति'--इत्येव वि० ।

¶ धारणार्थ--धृ-धातोः कर्त्तरि मनिपि धर्म्मन्निति ततस्तस्मात्-सप्तमी-लुकि रूपम् ।

अथ षष्ठी ।

३ १२ ३ १ २ ३ २३ १ २ ३ २ २ १ २
साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः ।
३ १ २ ३ १र १र ३ १ २ ३ २ २ २ ३ २
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ ६ ॥ ७२*

४ ५ १ र २ १
(दाशस्पत्ये द्वे ॥) साकाम् । उक्षोमर्जयन्त । स्वसा
२ १ १र र २ १ २ १
२३राः । दाशा२ । धीरस्यधीतयोधनू२३त्रीः । हारी
१ र ७ २ १ १
२ः । पर्यद्रवज्जाःहरियार२३स्या । द्रोणा२म् । नन-
र र २ १ १ १ १
क्षेअत्योनवा२३ । हाउवा३ । जी२३४५ ॥ २४ ॥

५र ५ २ ५ ४ ५र
साकमुक्षाइ६ए । ए३१२३४ । मर्ज्जयन्तस्वसारः ।
र ५ २ ५र ४ ५र ४ ५ ४ ५
दशधीराइ६ए । ए३१२३४ । स्यधीतयोधनुत्रीः । हरिः
५ २ ५ ४र र ५ र ५
पर्याइ६ए । ए३१२३४ । द्रवज्जाःसूर्यस्य । द्रोणन्ननाइ६ए ।
२ र ५र ४ ५ ५ ३ १ १ १ १
ए३१२३४ । क्षेअत्योनवाइ६ । हाउवा । जी२३४५ ॥२५॥ ७२

---

* छं० ६,२,१५,१=ऋ० ७,४,२,१=जहे ८,१,७ – १२,१,६—१८,२,४ ।

अथ सप्तमी।

३ १ २ ३ १२ ३२ ३ १ २ ३ २३ २ ३१र २र
अधियदस्मिन्वाजिनीवशुभस्पर्द्धन्तेधियःसूरेनविशः।
३ १ २३ १ २ ३ १ २ ३ १र २र३ १ २ ३ १ २
अपोवृणानःपवतेकवीयान्व्रजन्नपशुवर्द्धनायमन्म॥ ७ ॥७३*

नौधाऋषिः†। "साकमुक्षः" [उक्ष सेचने (भ्वा० प०) क्विपि रूपम्] तादृश्यः "स्वसारः" कर्म्म-करणार्थ मितस्ततः सुष्ठु गच्छन्त्यः‡ अङ्गुलयः¶ "मर्जयन्त" सोमं शोधयन्ति [मृज् शौचालङ्कारयोः (चु० उभ० ] ताः दशसङ्ख्याका: "धीतयः" [अङ्गुलिनामैतत् (नै०२,५,७] अङ्गुलयः "धीरस्य" समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति§। ततः "हरिः" हरितवर्णः सोमः "सूर्य्यस्य" "जाः" प्रादुर्भूता जाया दिशस्ताः‖ "पर्य्यद्रवत्" परितो गच्छति। सूर्य्यस्य तेजसा हि आविर्भवतीति दिशां तस्य जायात्वम्। "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" कलशं "ननक्ष" व्याप्नोति [नक्षति-व्याप्ति-कर्मा (नै०२,१८,२)॥ ६ ॥ ७२

---

* ऋ०९,४,४,१।

† "गौतमः"—इति क्वापि नै०।

‡ स्वृ शब्दोपतापयोः (भ्वा० प०)—इत्यस्य रूपं स्वसेत्यभिप्रायः।

¶ "स्वसारः"—इत्यङ्गुलि-नामसु त्रयोदशतमं नैघण्टुकम्।

§ "तायन्ति"—इति वि०।

‖ "अपत्यम्"—इति वि०। "जाः"—इत्यपत्यनामसु नवमं नैघण्टुकम् २,२।

४ ५ ४ ३ ५र २
(कश्यपस्य च शोभनम्॥) अधियदा। स्मा२इन्वा२जि
५र १ ' २ र १ र १ ३ ४ ५
नीरवप्रु। भाः। स्पर्द्धन्तेधियःस्व। रा२इनविशाः।
१ १र र ७ १ १
अपोवृणानःपवता२इ। कवी२३यान्। व्रजन्न। पा।
२ १ १ १ ४
प्रुवर्द्ध। ना३४३। या३मा५न्मा६५६॥ २६॥ ७३

कण्वऋषिः*। "यद्" यदा "अस्मिन्" सोमे "वाजिनीव शुभः"† अश्वे यथा वस्त्रप्रभृत्यलङ्कारा भवन्ति। यदा वास्मिन् सोमे "सूरे न" सूर्य्ये न यथा सूर्य्ये "विशः" रश्मयः उदिता भवन्ति तदा "धियः" अङ्गुलयः "अधिस्पर्द्धन्ते" अहं पुरस्ताच्छोधयाम्यहं पुरतः शोधयामीत्यहमिकया उपतिष्ठते। ततोऽयं सोमः "अपः" वसतीवरीः "वृणानः" आच्छादयन् "पवते" पात्रेषु चरति कलशानभिगच्छति। कीदृशः? "कवीयान्" कविरिवाचरन्। यद्वा। कवयः स्तोतारः तानिच्छन्। तत्र दृष्टान्तः—"व्रजं न" "मन्म" मननीयं बोद्धव्यं रक्षितव्यं गवां गोष्ठं पशुवर्द्धनाय गोपालः परिगच्छति यथा तथा देवानां प्रीणनाय पात्राणि पवते॥

"सूर्य्ये"-"सूरे"—इति, "कवीयान्"—"कवीयन्"—इति च साम्न ऋचः पाठः॥ ७॥ ७३

---

* "घौरः"—इति ऋषि० नै०।

† शुभइति शुभ शोभायाम् (भ्वा०आ०)—इत्यस्य रूपम्। विसर्गस्तु न दृश्यते मूले।

अथाष्टमी।

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ ३ १ २
इन्दुर्वाजीपवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय।
३ २ ३ १ २ ३ १२ १२ ३
हन्ति रक्षोबाधते पर्यरातिं
१ २ ३ २ ३ १ २ ३ १ २
व*रिवस्कृ†ण्वन्वृजनस्य राजा ॥ ८ ॥ ७४‡

२ १ १ २२
(दाशस्पत्यानि चत्वारि ॥) इन्दू३र्वाजी२। पवतेगो-
२ १ ५ १ २
नियोघाः। इन्द्राइसो२३४माः। साहइन्वन्मदाया।
१ ५ १२ २ २ १ २
हन्ताइरा२३४क्षाः। बाधतेपर्यरातिम्। वराइवा२३४स्कृ।
२ १ १ ऽ २ २ ५ ४
ण्वन्वृजाना२३स्या। रा३जौवाओ२३४वा। हो५इ।
डा ॥ २७ ॥

४ ५ २ ४२ ५ २ ४२ ५ १ ० २
इन्दुर्वाजीपवतौ। हौहोवाहाइ। गोनियौघौ।
३ ५ १ ऽ२ १२ ऽ२ १ २ १ २
वाओ२३४वा। इन्द्र२सोमा२ःसहइ। न्वान्मदायौ। वा-
३ ५ १ २ १ २२ १२ २२ १ ० २ ३
ओ२३४वा। हन्तिरक्षोबाधते। पार्यरातौ। वाओ-

* "अरातीर्व"—इति, † "वरिवःकृ"—इति च ऋ०।
‡ उ० ३,२,२०,१ = ऋ० ७,४,१२,५ = कट्हे ३,२,१५—८,२,५।

५ १ २ १ २ १ ऽ २
२३४वा। वरिवस्कृण्वन्च् जना३। स्या। रा३जौवा-

५ ४
ओ२३४वा। हो५इ। डा॥ २८॥

५ र र र र ४ ५ १र २
इन्दुरौहोवाहाईयावाजाउ। वा३। हाउवा।

र र १ २ २ १ २
पवतेगोनियोघाउ। वा३। हाउवा। इन्द्राइसोमः।

१ २ २ १ ३ ५र र
सहइन्वाउ। वा३। हाउवा३। मा२दा२३४औहोवा।

३ १ १ १ १ २ १ २ र १ २
या२४५। हन्ताइरहो। बाधाताइपाउ। वा३।

२ १ ३ ५र र ३ १ १ १ १ २ ३
हाउवा३। यी२रा२३४औहोवा। तीर३४५म्। वरा-

२ १ २ २ १
इवस्कृ। एवन्च् जनाउ। वा३। हाउवा३। स्या२-

३ ५र र २ १ ५ १ १
रा२३४औहोवा। जा२३४५॥ २९॥

५ र र र र ४ ५ ए र
इन्दुर्वाजीपवतेगोनियोघाः। इन्द्रे सोमःसहइन्वन्म-

४ ५ ३र र र ४ ५
दाया। हन्तिरक्षोबाधतेपर्यरातीम्। वरिवस्कृण्वन्च् ज-

४ ५　　३र २　　५र र　　२　　२ १र ३ १ १ १ १
नस्यराजा। राजा३४औहोवा। ए३। स्यराजा२३४५

॥ ३० ॥ ७४

॥ इति ग्रामे गेये पञ्चदशः प्रपाठकः ॥

मन्युर्वासिष्ठ ऋषिः। "इन्दुः" चरणशीलः* "वाजी" बलवान् "गोन्योघाः" गमनशील-नीचीनाग्र-रससङ्घातः† "इन्द्रे" "सहः" बलकरं रसम् "इन्वन्" प्रेरयन्‡ "सोमः" "मदाय" तस्य मदार्थं "पवते" चरति। किञ्च। "रक्षः" रक्षःकुलं "हन्ति" हिनस्ति। किञ्च। "अरातीः" अरातीन्¶ शत्रून् "परिबाधते" परितः संहरति। कीदृशः? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतॄणां कुर्वन् "वृजनस्य" बलस्य§ "राजा" ईश्वरः‖ सोम इति ॥ ८ ॥ ७४

---

* अतएव "इन्दुः"—इति उदकनामसु दृश्यते च (नै०१,१२,८३) "उन्देरिच्चादेः—(उ,१)"—इत्युनत्तेरिन्दुरिति।

† गो—गमनशीलः, नी—नीचिनः, (तस्य अग्रे विद्यमानः) ओघः—रससङ्घातः। "गोनी"-शब्दो गमनशीलार्थेऽपभ्रंश इत्युदाजहार च पस्पशे पतञ्जलिः।

‡ "इन्वति"—इति गतिकर्मसु पञ्चदशाधिकशतं नैघण्टुकम् १,१४।

¶ भाष्यकारस्त्वत्र ऋग्वेदीयपाठमनुसृत्य व्याचख्यौ, सामवेदीयपाठस्तु "अरातिम्"—इति।

§ "वृजनम्"—इति बलनामसु एकविंशतितमं नैघण्टुकम् २,९।

‖ "राजति"—इति ऐश्वर्यकर्मसु चतुर्थं नैघण्टुकम् २,२१।

अथ नवमी ।

१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अयापवापवस्वैनावसूनिमाꣳश्चत्वइन्दोसरसिप्रधन्व ।
३ २ ३ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्यवातोनजूति
२ ३१ २ ३ १ २ ३ १ २
म्पुरुमेधाश्चि*त्तकवेनरन्धात् ॥ ९ ॥ ७५ †

५र ४ ५ ४ ५
(औष्ठानि त्रीणि ॥) औहोहाइ । अयोहाइ ।
१ र र र २ १ २ ५ २ ३ २ ५ २
पवापवस्वैनावसू२३नी । औ२होइ । इहा । ई३या ।
र १ र २ १ २ ५ २ ३ २
माꣳश्चत्वइन्दोसरसिप्रधा२३न्वा । औ२होइ । इहा ।
५ २ १ र र २ १ २ ५ २ ३ २
ई३या । ब्रध्नश्चिद्यस्यवातोनजू२३तीम् । औ३होइ । इहा ।
५ २ १र र र २ १ २ ५ २
ई३या । पुरुमेधाश्चित्तकवेनरा२३न्धात् । औ३होइ ।
३ २ ५ ३ ५र र २ २र ३ १
इहा । ई२ । या२३४ । औहोवा । ए३ । दीदिवी१ ॥
॥ १ ॥

५ ४ ५ ४ ५ १ र र २ १ २ र
अयोहाइ । पवोहाइ । पवस्वैनावसू२३नी । इहो

* "पुरुमेधश्चि"—इति ऋ० ।

† उ०४,१,२१,१ = ऋ०७,४,२१,२ = ऊहे १,२,१७—८,२,१०—२३,२,१ ।

इया३ । ई३या । मा९ स्वत्वइन्दोसरसिप्रधा२३न्वा । इ
होइया३ । ई३या । ब्रध्नश्चिद्यस्यवातोनजू२३तीम् ।
इहोइया३ । ई३या । पुरुमेधाश्चित्तकवेनरा२३न्धात् ।
इहोइया३ । ई२ । या२३४ । औहोवा । ए३ । दो
दया२३४५त् ॥ २ ॥

हाओ२३४वा । २ । हा३ओ२३४वा । हाउवा । अया-
पवापवस्वैनावसूनि । इहइ । हिया२ । इहा । इहा ।
मा९ स्वत्वइन्दोसरसिप्रधन्व । इहइ । हिया२ । इहा ।
इहा । ब्रध्नश्चिद्यस्यवातोनजूतिम् । इहइ । हिया२ ।
इहा । इहा३ । हाओ२३४वा । २ । हा३ओ२३४वा ।
हाउवा । पुरुमेधाश्चित्तकवेनरन्धात् । इहइ । हिया
२ । इहा । इहा२३४५ ॥ ३ ॥ ७५

कुत्सऋषिः* । हे सोम ! "अया" अनया "पवा" पवमानया धारया सह "एना" एनानि "वसूनि" धनानि "पवस्व" चर [पवा—पूञ् पवने (क्र्या० उ०) "अन्येभ्योपि दृश्यन्ते (३,२,१०१)" —इति विन् प्रत्ययः । आर्धधातुकलक्षणो गुणः । "सावेकाचः (६,१,१६८)"—इति तृतीयाया उदात्तत्वम्] । तथा हे "इन्दो"! त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके† वसतीवर्य्याख्ये कलशे "प्रधन्व" प्रगच्छ‡ । ततः "यस्य" यं "ब्रध्नश्चित्" सर्वेषां प्रज्ञापकः मूलभूतो वा आदित्यः¶ "वातो न" वात इव "जूतिं" वेगं§ कुर्वन् । किञ्च । "पुरुमेधाश्चित्" बहुविधप्रज्ञ इन्द्रश्च "तकवे" [तकतिर्गतिकर्म्मसु पठितः‖ । अस्मादौणादिक उन् प्रत्ययः यस्येति (२,३,३७) कर्मणि षष्ठी ॥ "न लोकाव्ययेति (२, ३, ६९) षष्ठी-प्रतिषेधश्छान्दसः] सोम मभि गच्छता मित्यर्थः ॥

"यस्य"-"यच"—इति, "जूतिं"—"जूनः"-इति,—"नरन्धात्"-"नरन्दात्"—-इति च साम्न ऋचः क्रमेण पाठाः ॥ ६ ॥ ७५

---

* "आङ्गिरसः"—इति ऋषि-नै० ।

† "सरः"—इत्युदकनामसुपठितं शत्पदम् नै०१,१२ ।

‡ "धन्वति"—इति गतिकर्मसु चतुःषष्टितमञ्चैवष्टुकम् २,१४ ।

¶ 'ब्रध्नः ब्रह्म, सविता वा महान् वा'—इति वि० ।

§ अवतेर्वेगकर्मणि ऊतिजूतीत्यादिना (३,३,९७) निपातनात् जूतिरिति ।

‖ नि० नै० २,१४,६८ ।

अथ दशमी।

३ १र　२र　३ १ २ २ ३ १र　२र　१ २
मह्त्तत्सोमोमहिषश्चकारापांयद्गर्भोवृणीतदेवान्।
१ २ ३　२ ३ १ २　३ १र
अदधादिन्द्रे पवमानओजो
२र ३ २ ३ २　३ १ २
जनयत्सूर्येज्योतिरिन्दुः॥ १० ॥ ७६ *

२　र र　१　र
(आत्रम्॥) मह्त्तत्सोमोमहिषश्चा३कारा२। अपां
र र　१　र र र　१
यद्गर्भोवृणीता३दा३इवा२न्। अदधादिन्द्रे पवमाना३ओ
र ५र　१　२　२
जा२ः। अजनयत्सूर्ये३ज्यो२३। तिरिन्द्रा३उवा३। ए३।
१　२　१र २र १र २ १　१ १ १ १
अजनयत्सूर्येज्योतिरि। दू२३४५ः॥ ४ ॥ ७६

"पराशरऋषिः†। "महिषः" महान्‡ पूज्यो वा "सोमः" "महत्" प्रभूतं¶ "तत्" कर्म "चकार" अकरोत्। किं तत्?

---

* उ० ५,२,१,२ = ऋ० ७,४,१९,१ = ऊहे १७,२,१—२२,२,५—२२,२,८—२२, २,९ = ऊह्ये ६, २,५।

† "शाक्त्यः"—इति ऋषि-नै०।

‡ अत्राह यास्कः—'महत्तत्सोमोमहिषश्चकारापां यद्गर्भोऽवृणीत देवानाधिपत्य मदधादिन्द्रे पवमान ओजो ऽजनयत् सूर्ये ज्योतिरिन्दुरादित्य इन्दुरात्मा'—इति नि०प०२,१७।

¶ 'महत् असम्भाव्यम्'—इति वि०।

अथैकादशी।

१ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २
असर्जिवक्कारथ्येयथाजौधियामनोताप्रथमामनीषा।
३ १ २ ३ २ ३ २ ३
दशस्वसारोअधिसानो
१ २ ३ २ ३ २ ३ १ २ ३ १ २
अव्येम्ञ्जन्ति*वह्निꣳसदनेष्वच्छ॥ ११ ॥ ७७ †

"अपाङ्गर्भः" उदकानां गर्भभूतः‡ जनयितृत्वाज्जन्यत्वाद्वा। स सोमः "देवान्¶" "अवृणीत"§ समभजतेति "यत्" तत् कृतवानिति। किञ्च। "पवमानः" पूयमानः‖ सोमः "ओजः"+ सोमपानजन्यं बलम् "इन्द्रे"÷ "अदधात्" न्यधात् तथा "इन्दुः" सोमः× "सूर्ये"** "ज्योतिः" तेजः†† अजनयत्‡‡ ॥ १० ॥ ७६

* "अव्येषञ्जन्ति"—इति ऋ०।

† ऋ० ७,४,१,१=आरण्ये १,२,२२।

‡ 'अपां यद् गर्भदर्शनमात्र' पञ्चानां भूतानां गर्भः'—इति वि०।

¶ 'इन्द्रियाणि'—इति वि०।

§ 'अवृणीत अधिष्ठितवान्'—इति वि०।

‖ 'पूयमानः विषयप्रमाणेन'—इति वि०।

+ 'ओजः बल मणिमादि'—इति वि०।

÷ 'इन्द्रे आत्मनि'—इति वि०।

× 'ज्योतिरिन्दुरादित्यः अध्यात्मम्'—इति वि०।

** 'सूर्ये सरणशीले'—इति वि०।

†† 'तेजः इन्द्रः'—इति वि०।

‡‡ 'तथाचोक्तः—येन सूर्यस्तपति'—इति वि०।

२ १ २ २ १ १
( वासिष्ठम् ॥ ) असाओ३ होा । जिवाक्का२ । रथ्या

२ ५र ३ १ १ १ १ २ १ २ २ १
इया३४ । था । जा२३४५उ । धियाओ३ होा । मनो-

१ २ ५र ३ १ १ १ १ २ १ २ २
ता२ । प्रथमामा३४ । नी । षा२३४५ । दशाओ३होा ।

१ १ २ ५ ३ १ १ १ १ १ १
स्वसारा२ः । अधिसानो३४ । अ । व्या२३४५इ । मृजा

२ २ १ १ १ ५
ओ३ होा । तिवाक्को२म् । सदनाइषू३४ । अक्का२उ ।

१ १ १
वा३४५ ॥ ५ ॥ ७७

कश्यपऋषिः*। "वक्का" शब्दायमानः [वच परिभाषणे (अदा०प०) वनिप्] तादृशः पवमानः सोमः "आजौ" अजन्ति कर्मार्थं ऋत्विजइति आजिर्यज्ञः तस्मिन् "धिया" कर्मणा स्तोत्रेण वा† साकम् "असर्जि" पात्रेषु सृज्यते‡ । तत्र दृष्टान्तः । "रथ्ये यथा" रथ्ये रथार्हे [आजौ सङ्ग्रामनामैतत्¶ । अजन्ति प्रक्षिपन्त्या युधान्यत्रेति तस्मिन्] अश्वो यथा सृज्यते तद्वत् । कीदृशः ? "मनोता" यस्यां देवानां मनांसि प्रोतानि सा [तथाच ब्राह्मणम्—"तस्यां हि तेषां मनाꣳस्योतानि"—इति ] "प्रथमा"

---

* "मारीचः"—इति ऋषि-नै० ।

† 'धिया प्रज्ञया कर्मणा वा'—इति वि० ।

‡ 'सृष्टवान्'—इति वि० ।

¶ नि० नै० २,१७,८ ।

अथ द्वादशी।

३२ ३१२३२ ३१२ ३ १२३१२ ३२३१२
अपामिवेदूर्मयस्तर्तुराणाःप्रमनीषाईरतेसोममच्छ।

३ २३ १ २३१२ ३१र
नमस्यन्तीरुपचयन्तिसञ्चा

२र ३२३१२
चविशन्त्युशतीरुशन्तम्॥ १२॥ ७८*

॥ पञ्चमदशति ॥ ॥ अर्द्धः प्रपाठकः ॥

५ ४र ५ ५ ४र५र ४ ५ ४र
(अपाञ्च साम ॥) अपामिवेदूर्मयस्तौ। होवा।

५ १२ ३ ३र २ १ २र १ २र
हाइ। तुराणा२३४ः। हाहोइ। प्रमनी। षाः। ईर-

मुख्या "मनीषा" मनस ईषा मनीषा स्तुतिः तद्वान्। यद्वा। धिया विदधाति स्तुतीरिति धीः स्तोता तेन स्तुतिः प्रेर्यते। किञ्च। "दश स्वसारः" दशसङ्ख्याका अङ्गुलयः† "सदनेषु" यज्ञगृहेषु पात्राण्यभिमुखीकृत्य "वह्निं" वोढारं सोमं "सानौ" समुच्छ्रिते [अधिः सप्तम्यर्थानुवादकः] "अव्ये" अविभवे अविबालेन कृते पवित्रे "अञ्जन्ति" प्रेरयन्ति‡॥

"प्रथमा मनीषा"—"प्रथमो मनीषी"—इति, "सदनेषु"—"सदनानि"—इति च साम्न ऋचः पाठः॥ ११॥ ७७

* ऋ० ७,४,५,३।

† "स्वसारः"—इति अङ्गुलिनामसु अष्टमं नैघण्टुकम् २,५।

‡ "अञ्जन्ति"—इति तु ऋग्वेदीयः पाठः, तमेवावावलम्बितं सायणेन। सामवेदीयपाठस्तु "मृजन्ति"—इति ; अतएव 'मृजन्ति शोधयन्ति'-इति वि०।

२, ३ ५ २ ३र २ १
तेइ। सोमम। च्छा३४। हाहोइ। नमस्य। ताइः।
२ २ ३ ५ २ ३र २ १ २
उपचाइ। यन्तिसम्। चा३४। हाहोइ। आचवि।
१ २ ३ २, ३ ५ २ ३र २ ५र
शा। तियुश। तीरुश। ता३४म्। हाहा३४। औ
र २ १ १ १ १ १
होवा। वाइहार३४५ः॥ ६॥ ७८

प्रस्कण्वऋषिः*। "अपामिव" यथा उदकानाम् "ऊर्मयः" त्वरन्ते। "इत्"—इति पूरणः। तद्वत् "तर्तुराणाः" कर्मणि देवान् स्तोतुन्त्वरमाणाः। [तुर त्वरणे जौहोत्यादिकः (आ०)। यङ्लुगन्तस्य शानचि रूपम्। अभ्यासस्य उवर्णस्य रेफादेशश्छान्दसः। अभ्यस्तस्वरः†। तादृशा ऋत्विजः "मनीषाः" मनस ईशित्रीः स्तुतीः "सोममच्छ" सोमं प्रति प्रेरयन्ति। "नमस्यन्तीः" नमस्यन्त्यः सोमं योजयन्त्यः सत्यः तम् "उपयन्ति" च। उप समीपे गच्छन्ति। तमेव "संयन्ति च" सङ्गच्छन्ते। "[च वा योगे प्रथमा (८,१,५८)—इति न निघातः] "उशतीः" कामयमानाः स्तुतयः "उशन्तं" कामयमानं सोमम् "आविशन्ति च" प्रविशन्ति च॥ १२॥ ७८

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य सप्तमः खण्डः॥

॥ इति त्रैष्टुभम्॥

---

* "काण्वः"—इति ऋषि-मै०।

† "अभ्यस्तानामादिः (६, १, १८९)"—इति पा०।

पुरोजितीति–मुख्यास्तु नवर्चो बृहतीत्यसौ—
"आहर्य्यतायधृष्णवे" शिष्टा अनुष्टुभः स्मृताः* ॥
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे† ॥

तत्राष्टमे खण्डे—

सैषा प्रथमा।

३ १   ३   ३   १   २   ३   १   २   ३   १   २
पुरोजितीवोअन्धसःसुतायमादयित्नवे।
३   १   २   ३   १   २   ३क २र
अपश्वानꣳश्नथिष्टनसखायोदीर्घजिह्वम् ॥ १ ॥ ७९

५ र   २   ३   ५   २
(प्रह्वौ द्वौ ॥) पुरोजितौ। वाअन्धा२३४साः। सु-
१र   २   ५   १
तायामा ऽ२दया३१उवाये३। त्ना२३४वे। अपश्वाना२ꣳ

* पुरोजितीतिमुख्याः 'पुरोजितीवोअन्धसः'–इतिप्रभृतयः नव ऋचः, अत्राष्टमे-खण्डे श्रूयन्त इति शेषः। तत्र आहर्यतायेति सप्तमी ऋक् बृहतीछन्दस्का, शिष्टाः अष्टौ अनुष्टुप्छन्दस्का इत्यर्थः।

† 'विनियोगस्त्वासां ज्योतिष्टोमे'—इति वि०।

‡ ऊ० १,१,१८,१ = ऋ० ७,५,१,१ = आरण्ये १,२,२२ = ऊहे १,१,११—१,१,१२—२,२,१८— ४,१,१३—४,१,१४—६,२,९—७,२,१० —८,२,१५—८,२,१६—८, २,१७—१०,१,३—१०,१,१०—१२,१,६—१२,२,११—१२,२,१२—१२,२,१३—१२,२,१४—१३,१,६—१३,२,६—१६,१,३—१६,१,८—१६,१,९—१६,२,६—१७,१,३—१७,१,४—१७,१,१७—२०,१,१८—२०,२,१२—२०,२,१३—(२१,२,१)—२१,३,२— २१,१,६—२२,१,७—२२,१,९—२२,२,१३—२२,२,१५—२३,१,९ = ऊह्ये ३,१,१—२,१,१८—२,२,३—२,२,५—३,१,१—३,१,१९—३,२,२—४,१,८—४,२,५—४,२,८—४,२,१४— ४,२,१६—(५,१,८—५,१,१२)—५,२,१४—६,१,१२।

अथा३१उवायेइ। ष्ठा२३४ना। सखायोदीऽ२र्घजा३१
वायेइ। क्षीर३४याम्॥ ७॥

पुरोजिती। वो३अोन्धा३साः। हतायमा२। ऊ२।
हा२इ। ओऽ२। दा३याइत्ना३वे। आपश्वाना२म्।
ऊ२। हा२इ। ऊऽ२। श्रा३थाइष्टा३ता। साखा
योदा२इ। ऊ२। हा२इ। ऊ२३। घा२जा२३४
औहोवा। ए३। क्षिया२३४५म्॥ ८॥

(कार्त्तयशम्॥) पुरोहाहाउ। जा२३४इती। वो
आऔ३हो३। धासाः। सुताऔ३हो३। यामा६।
हाउवा। दयित्नवे२। उपा। अपश्वानꣳश्रथा१इष्टा
३ना। सखाऔ३हो३। योदा६। हाउवा। घजि
क्षियम्। उपा२३४५॥ ९॥

५४र ५ र ४५ ४
(औद्ब्रं सद्मनम्॥) पुरोजितीवोअन्धसः। ओवा-
५ २ र र १ र
हाइ। सुतायमादयित्नवओवार२होइ। अपश्वान
१ २र र १ २ ३
अथिष्टनओवार३होइ। साखायोदाइ। घाजिक्वार२
२ २ १र २१ र ऽ ३२
४५याई५६म्। सुवृक्तिभिर्नृ मादनम्भरे२थुवा१॥ १०॥

३२ २ ४ र ५ २
(श्यावाश्वम्॥) पुरो३१। जी३ती। वोअ। धा
४ ५ १ र र २ १
३सः। एहिया। सू। तायमादा। यि। त्नवा२इ।
१र १र २ ४ ५ २र
एहिया२। अपश्वानश्ना३थी३। ष्टा२३४ना। ऐहा
१र र १र २ ४ २
२इ। एहिया२। सखायोदाइर्घा३जी३। क्वा३४५ये।
५
६हाइ॥ ११॥

५ र र ५ २ १र
(आन्धीगवम्॥) पुरोजितीवो४न्धासाः। सुताय।
र २ १ १ र र २
मादा२३या। ऊम्मा२१ऽ२। त्नवेअपश्वानश्नथिष्टन।
१ २ २ १ २ १
साखा३उवा। यो२दो। घा२३जी। क्वियाम्। औ
४ ५ ४
२३होवा। हो५इ। डा॥ १२॥ ७९

अथ द्वितीया।

३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
अयम्पूषारयिर्भगःसोमःपुनानोअर्षति।

३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्यभूमनोव्यख्यद्रोदसीउभे ॥ २ ॥ ८०*

श्यावाश्वऋषिः†। हे "सखायः" सखिभूताः समानख्याना वा हे स्तोतारः! "वः" यूयं "पुरोजिती" [षष्ठ्याः पूर्वसवर्ण-दीर्घः‡] पुरः-स्थित-जयस्य "अन्धसः" अदनीयस्य सोमस्य स्वभूताय "सुताय" अभिषुताय "मादयित्नवे" अत्यन्तं मदकराय रसाय "दीर्घजिह्व्य" [दीर्घा जिह्वा अस्य स दीर्घजिह्वी "दीर्घजिह्वी च छन्दसि (४,१,५९)—इति "ङीषन्तत्वेन" निपातितः। तादृशं] "श्वानं" च "अपश्नथिष्टन" अपश्नथयत¶ अपबाधध्वम्। यथा श्वा राक्षसा वा "सुतं" सोमं न लिहन्ति तथा कुरुतेत्यर्थः॥ १ ॥ ७९

---

* उ० ५,१,१६,१ = ऋ० ७,५,२,१=आरण्ये १,२,८—१,१,१७—२,२,१८—१,१,१९ ऊहे१,२,८—२,२,९— ७,१,५—११,२,१०—११,१,२०—१३,१,२—१५,१,११—१५,१, १४—१५,१,१७—२०,१,५—२०,२,१८—२२,२,९=ऊह्ये२,१,६—२,१,८—३,१,११—२, २,११—५,२,९—६,१,८।

† 'चाक्षीगुः श्यावाश्विः'—इति ऋषि-नै०।

‡ सुपांसुलुगित्यादिना (७,१,३९)।

¶ 'शिथिलीकरोतु'—इति वि०।

२ १२२ २२ १ २२
(क्रौञ्चानि त्रीणि ॥) अयम्पूषौहो। रायिर्भगाः। सोर

१ २ ४ २ १२ २२
मःपुना३। नोआर्षापूतरई५६इ। पतिर्विश्वाहोर। स्या-

१२ २ १ २ ४
भूमनाः। वियख्यद्रो३। दासी३ऊ५भा६५६इ॥ १३ ॥

५ २ २ १ १ १२ १
अयम्पूषा। अयम्पूषा। रयिर्भगाः। सोमःपूना

२ १ २ १ १ २
२। नोग्रषंताइ। पतिर्वाइश्वा २। ओस्याभू१माना २ः।

१ २ १२ १ २
ओइवियख्या२३द्रो। दासीउभ। इडा२३भा३४३।

१
ओ२३४५इ। डा॥ १४ ॥

४ १४२५२ २ ३४ ५ ५ १ १
अयम्पूषा। हो। रयिर्भगा६ए। सोमा२ःपुना२।

१२ ३ ५ १ ११२ २ १
नश्रा३४५। षा२३४ती। पतिर्विश्वस्यभूमनः। विय-

२ १२ २ १
ख्या२३द्रो। दसीऊर२भा३४३इ। ओ२३४५इ। डा॥

॥ १५॥ ८०

अथ तृतीया ।

२ १ २ १ २ ९ १ २ १ २ २ १ २
सुतासोमधुमत्तमाःसोमाइन्द्रायमन्दिनः ।
२ १ १ २ १ २ २ १ १
पवित्रवन्तोअक्षरन्देवान्गच्छन्तुवोमदाः ॥ २ ॥ ८१*

५ र र १ २ १र
(त्वाष्ट्रीसाम ॥) सुतासोमा । धुमा३त्तमाः । सो-
२ १ १ १ २ २ १ २ २
माइन्द्रा३यमा३ । ए३ । दिनआ । पवाइत्रवा३न्तो

ययातिर्नाहुषऋषिः[†] । "पूषा" पोषकः सर्वेषाम्[‡] । "भगः" भजनीयः[¶] "रयिः" धनहेतुः "अयं" सोमः "पुनानः" पवित्रे पूयमानः सन् "अर्षति" कलशमभिगच्छति । तथा "विश्वस्य" सर्वस्य "भूमनः" भूतजातस्य "पतिः" पालयिता[§] "सोमः" "उभे" "रोदसी" द्यावापृथिव्यौ "व्यख्यत्" स्व-तेजसा प्रकाशयति । अनेन लोकद्वयपतित्वं सूचितम्[‖] ॥ २ ॥ ८०

* उ० २,२,१५,१= ऋ०७,५,१,४=जह्ये २,२,२—१,१,२—२,२,४—७,१,१०—१५,२,२—१६,१,२—२०,१,१२—२७,१,११—२२,२,११=जह्ये २,१,१०—४,१,७— ५,२,११—५,२,१२—६,१,१०—९,१,१५—६,२,२ ।

† 'नाहुषो मानवः'—इति ऋषि-नै० ।

‡ 'पूषा पुष्यातेः । सोमः । अथवा पूषा आदित्यः'—इति वि० ।

¶ 'भगः एव सोमः शोभनः'—इति वि० ।

§ 'आदित्यात्मना'—इति वि० ।

‖ 'विनियोगोऽस्य द्वितीयेऽहनि'—इति वि० ।

२ २ ३ १ १ २ २ २ १ १र
३। ए३। ह्वरन्ना। दाइवान्गच्छा३न्तुवा३ः। ए३। मदा-
१
आ॥ १६॥

५ ४र ५र ४ ५ ४ १
(ऊर्द्ध्वइत्वाष्ट्री॥) सुतासोमधुमत्तमाः। सोमा२
१ ३ २ १ ५ २ १ २ र
इन्द्रा२। यमा३४५। दी२३४नाः। पविर्त्रवन्तोअक्ष-
३र र २ १ २ १र २ १
रन्। देवान्गच्छा। तुवोमा२३दा३४३ः। ओ२३४५
इ। डा॥ १७॥

५ ४र ५र ४ ५ र ४र ५
(वासिष्ठम्॥) सुतासोमधुमत्तमाः। सोमाइन्द्रा।
२ १ ७ १र २ १ र
यमन्दिनः। पाविन्नावा२। तोअक्षरन्। दाइवान्
२ ३ ५ २ १ २ ४५ ४
गच्छौवा। तू२३४वाः। मदा। औ३होवा। होपुइ।
डा॥ १८॥

५ ४र ५र ४ ५ र ४र
(आष्कारणिधनं त्वाष्ट्री॥) सुतासोमधुमत्तमाः। सो
५ २ ५र १ ७ २ १ १ ७
माहाउ। इन्द्रा३यामन्दिमा२ः। इन्द्रा३हो। यमा२

२ ५ २ १ ७ २ २ १
दा२३४इना:। पवित्रवा३न्तोअक्षारा२न्। त्रवा३ह्वो।
७ २ ५ २र र १ २ २र १
तो२क्षा२३४रान्। देवान्गच्छा३न्तूवो१मादा२ः। देवा
१ २ ५ १ २ ५र र २
३न्होइ। गच्छो२३४ह्वा। तू२वा२३४औहोवा। मदा-
१ १ १ १ १
३आ२३४५॥ १९॥

५र र ५ २र र
(वासिष्ठम्॥) सुतासोमधुमत्तमा६ए। सोमाइ
५र १ ७ १ १ ७
न्द्रा३यामन्दिना२ः। दाइना२ः। पवित्रवा३न्तोअक्षा-
१ रर १ १
रा२न्। क्षारा२न्। देवान्गच्छा३न्तूवो१मादा२ः।
१ ३र २ १ २ ५ १ २ ५र
मादा२ः। देवा३न्होइ। गच्छा२३४ह्वा। तू२वा२३४औ
र २ १ १ १ १ १
होवा। मदा३ई२३४५॥ २०॥

१र र २ २ ३ २ १
(स्वारत्वाष्ट्री॥) सुतासोमा३ह्वा। धुमत्तामा२ः।
१र र २ २ ३ २ १ १ २ २ ३र
सोमाइन्द्रा३ह्वा। यमन्दाइना२ः। पवित्रवा३ह्वा। ता-
२ १ १रर २ २ २ १ ५
अक्षारा२न्। देवान्गच्छा३ह्वा। तुवो३हो२३४। वा।
४ ५
मा५दो६हाइ॥ २१॥

५ र २र २ २ १
(द्विरभ्यस्तत्वाष्ट्री॥) सुता। सोमा३। हा३वा।
२ १ १ र १र १ १ १ १ १ १
धुमत्तामा२३४:। सोमा:। इन्द्रा३। हा३हा। यम
१ १ २ १ १ १ १र २ १
न्दाइना२३४:। पवि। त्रवा३। हा३हा। तोश्रच्छा
र ५र २ १ २ १ १ १ १
रा२३४न्। देवान्। गच्छा३। हा३हा। तुवो३दो२
५ ४ ५
३४। वा। मा५दो६हाइ॥ २२॥
५ र १ ४ ५ ४ ५ २र १र
(वासिष्ठम्॥) सुतासो३माधुमत्तमा:। सोमा
२ १ १ १ १ १ ५ २ र
इन्द्रा। यमन्दिन:। पावाश्रो२३४वा। त्रवन्ताश्रचरन्।
१र र १ १ २१र २ १
देवान्गच्छ। तुवोमा२३दा२४३:। श्रो२३४५इ। डा॥
॥२३॥ ८१

ययातिर्नाहुषऋषि:*। "मधुमत्तमा:" अतिशयेन माधुर्योपेता: अतएव "मन्दिन:" मदकरा: "सुतास:" अभिषुता: सोमा: "पवित्रवन्त:"† पवित्रे वर्त्तमाना: सन्त: "इन्द्राय" इन्द्रार्थम् "चरन्" पात्रेषु चरन्ति। अथ प्रत्यक्षस्तुति:। "व:" युष्माकं

---

* 'विनियोगोऽस्य तृतीयेऽहनि'—इति वि०।

† 'दशापवित्रवन्त:'—इति वि०।

अथ चतुर्थी ।

१ २　२ १ २ ३ १ २　२ १ २
सोमाःपवन्तइन्दवोऽस्मभ्यङ्गातुवित्तमाः ।
३ २　३ १ २ ३ १ २ ३क २र ३ १ २
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः ॥ ४ ॥ ८२*

४　५　२　१ ७ २
(कौञ्चे द्वे ॥) हाउसोमाः । पवा३न्ताइन्दावाउ ।
२　१ १ ७ २　२
वा३ । हाउवा । अस्मभ्यङ्गातूवित्तामाउ । वा३ । हा
१र र र　२ २　२
उवा । मित्राः स्वानाआरे१पासाउ । वा३ । हाउवा
५र　२ १　१ ४　२　५
३४ । सुवा । धिया३ः । हू२३वा३ः । वा३४५इदो६हा
इ ॥ २४ ॥

५र र　२ २ ३ ४ ५　१ १ २ १　२ ३ १ १
सोमाः पवन्तइन्दवाः । अस्माभ्यङ्गा । तुवित्तमाः ।
१ २　५　१र१र २र१ १　३ र २ १　१ १
माइत्राओ२३४वा । स्वानाअरेपसः । सुवाधियाः । सुव
२　१
र्वी२३इदा२३४३ः । ओ२३४५इ । डा ॥ २५ ॥ ८२

“मदाः” मद--हेतवो रसाः “देवान्” इन्द्रादीन्† “गच्छन्तु” ॥
॥ ३ ॥ ८१

---

* छ० ४,१,१०,१—ऋ० ७,५,१,५ = ऊहे २,२,१२—२,२,१४—२,२,१५—२,२,१६—१५,२,१९—१५,२,१७—१५,२,१८—१६,१,१—१२,१,१४ = ऊह्ये ६,१,१० ।

† ‘वस्वादीन्’—इति वि० ।

अथ पञ्चमी।

३ १ २ ३ १ २ ३ १ २ ३ १ १
अभीनोवाजसातमꣳरयिमर्षशतस्पृहम्।
१ २ ३ १ २ ३ १ २ १ १ २
इन्दोसहस्रभर्णसन्तुविद्युम्नंविभासहम्॥ ५॥ ८३*

(सोमसामानि त्रीणि॥) ५ र र अभीनोवा। १ २ जा२सा२३
५र र १ ५ २ १ २ १ २ १ र
४औहोवा। ता२३४माम्। रयिमरिशतस्पृहम्। इन्दो

मनुः सांवरणऋषिः। "गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः† "इन्दवः" दीप्ताः‡ सोमाः "पवन्ते" अस्मभ्यं मदर्थं "चरन्ति" आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः "स्वानाः" अभिषूयमाणाः "अरेपसः" पापरहिताः अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ४॥ ८२

---

* उ० ५,१,१६,१ = ऋ० ७,४,११,१ = ऊहे ५,१,३—५,१,४—५,१,५ — ५,१,६—५,१,७—५,१,८—११,१,१५—१२,१,१६—१७,१,१२—१७,१,१३—१७,१,१४—१७,१,१९—१८,१,१०—१९,१,२—१९,१,९।

† "गातुः"—इति पृथिवी-नामसु विंशतितमं नैघण्टुकम् १,१। किञ्च निरुक्त-चतुर्थे—"गातुं यज्ञाय गातुं यज्ञपतय इत्यपि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये"—इति च यास्कः।

‡ 'ज्योतिरिन्दुः'—इत्यादि नि० नै० प० ९,१७।

१ ० १ १ २
सहस्रभा२३हो । णसा२म् । तुविद्युम्नं विभा२३होये
२ ३
३ । सहमो२३४५इ । डा ॥ २६ ॥

५ र र १ र २ १ र
अभीनोवा । जासातमम् । रयिम । षाउवा२३ ।
१ २ २ १ २ १ ऽर १
हावा३हाइ । शतस्पृहम् । इन्दा२स । हाउवा२३ ।
१ २ २ १ २ १ ३ ५र र
होवा३हा । स्वभर्णसम् । तुवाये३ । द्युम्ना२३४औहो
२र १ ३ ११११
वा । विभासहा२३४५म् ॥ २७ ॥

२ १ २र र ४ २ ३ ५
अभी२होइ । नोवाजा३सा३ । हाता२३४माम् ।
२ १ २ ४ २ ३ ५ २
रयो२ऽहोइ । अर्षशा३ता३ । हास्पृ२३४हाम् । इ
१ २ ४ २ ३ ५ २
न्दो२होइ । सहस्रा३भा३ । हार्णा२३४साम् । तुवा
१ २ ४ २ ४
२होइ । द्युम्नं वी३भा३ । हा३सा५हा६५६म् ॥ २८ ॥

२ १ २ ५र २ १
(क्रौञ्चम् ॥) अभीनोवा३१२३४ । जसा । तमा३
२ १ २ ५ ३ २ २ १
म् । रयिमर्षा३१२२४ । शत । स्पृहा३म् । इन्दो

२ ५ ३ २ २ १ २
साहा३१२३४। स्रभ। णसा३म्। तुवाइद्यूम्ना३१२३

४
म्। विभा५सहाउ। वा॥ २९॥

४ र र र र ४
(सोमसाम॥) अभीनोवौहो५जसातमाम्। रयि

र ४ र र ४
मर्षौहो५शतस्पृहाम्। इन्दोसहौहो५स्रभर्णसाम्।

र र ४ ५ ४ ५
तुविद्युम्नौहो५विभासहाम्। सहम्। तुविद्युम्नंविभाई।

५ २ ११११११
हाउवा। सहा३मे२३४५॥ ३०॥ ८३

अम्बरीषऋजिश्वानौ* द्वादृषी। हे "इन्दो" दीप्यमान सोम! "वाजसातमम्" अत्यन्तं बलप्रदं मन्नप्रदं वा धनं पुत्रं "नः" अस्माकम् "अभ्यर्ष" अभिगमय†। कीदृशम्? "शतस्पृहं" बहुभिः स्पृहणीयम्। "सहस्रभर्णसं" बहुविधभरणम् अनेक-पोषण-युक्त मित्यर्थः। "तुविद्युम्नं" [द्युम्नं द्योततेर्यशो वान्नं वेति‡ यास्कः] बह्वन्नं बहुयशोयुक्तं वा। "विभासहं"¶ महतः प्रकाशस्याभिभवितारम् अतितेजस्विन मित्यर्थः॥

* "अम्बरीषः वार्षागिरः"—"ऋजिश्वा भारद्वाजः"—इति ऋषि-नै०।

† अर्षेति ऋषपतेर्गति-कर्मणो रूपम् (२,१४)।

‡ "द्युम्नं द्योततेर्यशो वान्नं वा "अस्मे द्युम्न मधि रत्नञ्च धेहि" अस्मासु द्युम्नं च रत्न च धेहि"—इति निरु० नै० ५, ५।

¶ "विभासहः" शब्दोऽसौ एकवारमेव श्रूयते त्रिवेद-संहितास्विति ध्येयम्।

अथ षष्ठी ।

३ १ २　३ १ २　२ १र　२र ३ १ २
अभीनवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् ।
२ ३उ　३ १र २र　३ १ २　३ १ २
वत्सन्न पूर्व आयुनि जातꣳ रिहन्ति मातरः ॥ ६ ॥ ८४

३　५　१
( आङ्गिरसानि त्रीणि ॥ ) आ२३४भी । ओइ नवन्त
२　१　२　१
आ३ १द्रा २ः । ओइ प्रियमिन्द्रस्य कामा१या २म् । ओइ
र　२　१　र　२
वत्सन्न पूर्व आयू१नौ २ । ओइ । जातꣳ रिहन्तिमा१२३
५　४　५
४ । वा । ता५रो६हाइ ॥ २१ ॥

५ र　२ २　४　२
अभी । नवी३२ । त आ५द्रुहाः । प्रियामिन्द्रा३ ।
१ २ ३　५　२　१ २ ३　५
स्याकामा२३४याम् । वत्सन्नपू३ । र्वा आयू२३४नौ ।
१र २　१　२ १　२१र　२　१
जाता३ꣳ हाइ । रिहा३हो । तिमातार३रा३४३ः । ओ
२३४५इ । डा ॥ २२ ॥

"शतस्पृहं"-"पुरुस्पृहम्"—इति, "विभासहं"-"विश्वासहम्"
—इति च साम्न ऋचः पाठः ॥ ५ ॥ ८३

* ऋ० ७,४,१७,१ = आरण्ये १,२,२४—६,१,२—३,१,४—४,१,११ ।

अथ सप्तमी।

१ २३ १ २३ २३१२ ३ १ २
आहर्यंतायधृष्णवेधनुष्टन्वन्ति*पौंस्यम्।
३ २उ ३ १ २ ३ १ २ ३१र २र ३ १ २
शुक्राविययन्त्यसुरायनिर्णिजेविपामग्रेमहीयुवः॥ ७॥८५†

५ ४र५ र ४५ ४ ५४ ५ ४र५
अभीनवन्तेअद्रुहः। ओहाइ। प्रियमिन्द्रस्यकामि
४ ५ ४ र५ ४र ५ र ४ ५
यम्। ओहाइ। वत्सन्नपूर्वआयुनि। औहोवाहा
१ २ ३ ५ २ १ २ ४
इ। जातꣳरिहौवा। ती२३४मा। तरा। औ३हो
५ ४
वा। हो५इ। डा॥ २२॥ ८४

ऋभ-सूनू काश्यपौ द्वयोः‡। यथा "मातरः" गावः "पूर्वे" प्रथमे "आयुनि"¶ वयसि "जातं" वत्सं "रिहन्ति" लिहन्ति तथा "अद्रुहः अद्रोहाः वसतीवर्याख्या आपः इन्द्रस्य "प्रियं" काम्यं सर्वैः काम्यमानं सोमम् "अभि नवन्ते"§ अभिगच्छन्ति॥ ॥६॥ ८४

---

* "धनुस्तन्वन्ति"—ऋ०।

† ऋ० ७,४,२५,१।

‡ अस्याः परस्याश्चेत्यर्थः। न चात्र यथासङ्ख्यम्।

¶ "आयवः"—इति मनुष्य-नामसु सप्तदशं नैघण्टुकम् (२,३)। इह तु तस्यैव क्लीवता वयोऽर्थता चेष्टा भगवतः सायणस्य।

§ "नवते"—इति गति-कर्मसु ऊनत्रिंशत्तमं नैघण्टुकम् २,१४।

३र २ १
(गृत्समदस्य सूक्तानि चत्वारि ॥ ) आहा३। ओ२३

५ २ १र २ १ ऽर २ २ १ ५ २
४वा। यंतायष्णवेर। धन ३ः। ओ२३४वा। तन्व

१र २ ३ २ १ ५
न्तिपौᳫस्रियम्। धृङ्का३ः। ओ२३४वा। वियन्त्वस्तु

२र १ ऽर ३ २ १ ५ १ ऽर र
रायनिर्णिजेर। विमा३। ओ२३४वा। अग्नेरमही

१ १ १ १ १
युवार२३४५ः ॥ ३४ ॥

२ २ १ ० २ ३ ५ २ २
हा३हाइ। आहर्यता। यार३४धृ। हा३हा३४।

५र र २ ५ २ २ १ २
औहोवा। ष्णा२३४वे। हा३हाइ। धन ष्टान्वा।

३ ५ २ २ ५र ५ ३ ५
तौर३४पौ। हा३हा३४। औहोवा। सी२३४याम्।

२ २ १ र २ १ ० २ ३ ५
हा३हाइ। धृङ्काविय। ताअस्तुरा। यार३४नौ।

२ २ ५र र २ ५ २ २
हा३हा३४। औहोवा। णी२३४जे। हा३हाइ।

१ २ ३ ५ २ २ ५र र
विपामाग्राइ। मा२३४ही। हा३हा३४। औहोवा।

३
यू२३४वाः ॥ ३५ ॥

४ ५ ३ र ५ ४ ५ ४ १ २ १
आह्वर्यतायधृष्णवआ। धनूष्टा१न्वा२। तिपौ९
२ १ र २ १ ७ २ १ ३
सा१या२म्। प्रुक्राविय। ताअसुरा३। यानीर्‌णा२३४
५ १ २ १ ४
इजाइ। विपामा१ग्रा२इ। ओइ। मा२३ही३।
२ ५
यू३४पुवो६हाइ॥ ३६॥

३ ५ २ ५ २ ४ ५ २
आ४ह्वर्य। ता४यधृ। ष्णा३वोधनुष्टन्वा। तिंपौ
३ २ १ र २ १ ० २ ३ २
९सियाम्। प्रुक्राविय। ताअसुरा। यनाउवा३।
५ १ २ २ १ २ २ १र
णी२३४जे। वाइपा२९हाइ। आग्रे२हाई। महीयू
२ १
२३वा३४३ः। ओ२३४५इ। डा॥ ३७॥ ८५

"हर्य्यताय"* सर्वैः स्पृहणीयाय "धृष्णवे" शत्रूणां धर्षणशीलाय सोमाय "पौंस्यं" पुंस्त्वस्याभिव्यञ्जकं वरं "धनुरातन्वन्ति" धनूषि ज्यां कुर्वन्तीति सोमस्य धारा-विसर्गार्थं वितायमानं पवित्र मभिधीयते। तदेव विवृणोति—"विपां" मेधाविनां "अग्रे"† पुरस्तात् "महीयुवः"‡ पूजाकामा अध्वर्य्यवः

* 'आहर्यतिः प्रेप्साकर्मा'—इति वि०।

† 'अग्रे प्रथमे'—इति वि०।

‡ 'महत्सोमं मिश्रयन्ति रश्मयः उदकानि वा'—इति वि०।

अथाष्टमी।

२ ३ १ २ ३ १र २र ३ १ २ ३ १ २
परित्यꣳ हर्यतꣳ हरिम्बभ्रुम्पुनन्तिवारेण।
३ २उ ३ २उ ३ १ २ ३ १र २र
योदेवान्विश्वाꣳइत्परिमदेनसहगच्छति॥ ८॥ ८६*

३ ४ ३ ४ ३ ४ ५
(द्विरभ्यस्तमाकूपारम्॥) परित्यꣳ हर्यतꣳ हरिम्।
३ र ४ ३ ४ ३
पार३४। रित्यꣳ हौहो५र्यतꣳ हराइम्। बभ्रुम्पुनन्ति
र ४र ५ १ र र ४र ३र ४र
वारेण। वार३४। भ्रुम्पुनौहो५न्तिवारेणा। यादे

"शुक्रा"† शुक्लवर्णानि गो-पयांसि "असुराय"‡ बलवते "निर्णिजे" स्वरूपाय शोधनार्थं "वयन्ति"¶ आच्छादयन्तीत्यर्थः॥

"शुक्राविवयन्त्यसुरायनिर्णिजे"-"शुक्रांवयन्त्यसुरायनिर्णिजम्" —इति साम्न ऋचः पाठौ॥ ७॥ ८५

---

* उ० ५,२,१८,१—८,२.८,२ = ऋ० ७,४,१४,१ = ऊह्ये ५,१,१८—५,१,१९—५,१,२० —६,१,१—६,१,२,— ६,१,३—११,२,१— ११,१,१—१४,१,१६—१४,१,१७—१४,१,१८—१४,१,१९—१४,१,२०—१४,२,२१ —१७,१,८—१७,१,९—१७,२,२—२०,२,४ = ऊह्ये ४,२,१।

† 'शुक्राः शुचिषमन्तः'—इति वि०।

‡ 'असुराय सुखाय वसुदानवते'—इति वि०।

¶ वयन्तीति पाठस्तु ऋग्वेदीयः। तमेवावलम्ब्यात्रेऽत व्याख्यानं भगवता सायणेनेति बोध्यम्। सामवेदीय-पाठस्तु वियन्तीति।

अथ नवमी।

१ २ ३ १२ १२ ३ २ ३ १ २ ३ १२ १२
प्रस्तुन्वानायान्धसोमर्त्तानवष्टतद्वचः।
३ १ २ ३ १ २ ३ २ ३ १२ १२
अपश्वानमराधसꣳहतामखन्नभृगवः॥ ९ ॥ ८७*

॥ प्रथम-दशति ॥

१२ ४र ३ ४ ५ १ २ २ २ २ ४
वान्विश्वाꣳइत्यरि। यो२३४। देवान्वौहो५श्वाꣳइत्य
३ ४र २ ४ ५ १ २ २
राइ। मदेनसहगच्छति। मा२३४। देनसौहो५ह-
४ ५
ग। च्छा५तोई२हाइ॥ ३८ ॥ ८६

ऋजिश्वाम्बरीषावृषी†। "हर्यतः" सर्वैः स्पृहणीयं "हरिं हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्वं" तं सोमं "वारेण" वालेन पवित्रेण "परि‡ पुनन्ति" परिशोधयन्ति। "यः" सोमः "विश्वान्" सर्वानिन्द्रादीन् "देवानित्" देवानेव "मदेन" मदकरेण रसेन सह "परि¶ गच्छति" इति §॥ ८॥ ८६

* उ० ६,२,३,१—१.१,२२,३ = ऋ० ७,५,३,३ = ऊहे १,२,१७— १,२,१८—६,२,१७ —६,२,२०—११,२,२—११,२,३—११,२,१३—१५,१,१६—१६,१,१४— १८,१,१० —१९, २,१९—१९,२,२०—१९,२,२१—२२,२,७ = ऊह्ये २,१,४—३,२,४—६,१.६।

† "ऋजिश्वा भारद्वाजः—अम्बरीषो वार्षागिरः"—इति ऋषि-नै०।

‡ 'परि समन्तात्'—इति वि०।

¶ 'परि देवं लक्षयित्वा'—इति वि०।

§ 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

२ १　　४र　५　　　　१ २
(वैरूपम् ॥) प्रसुन्वा२३नायअन्धसाः । मर्त्तः ।
१　　　२३ ३　　५　　२ र　३ २　　२　　५
नवा२ । ष्टतद्वा२३४चाः । अपश्वानमरा । धा२३४सा-
२ १र　　२　　३ २ ४
म् । हतामा२३खम् । नभृ३गा५वा६५६ः ॥ ३९ ॥ ८७

॥ इति अर्द्धः प्रपाठकः ॥

प्रजापतिर्ऋषिः* । "सुन्वानाय" अभिषूयमाणाय [षष्ठ्यर्थे चतुर्थी† ] अभिषूयमाणस्य "अन्धसः" सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तान" मर्त्यं इव कर्म-विघ्न-कारी "नवष्टन" कामयतां न शृणोत्विति यावत् । तथा हे स्तोतारः "अराधसं" साधक-कर्म-रहितः‡ । "श्वानम्" "अपहत" । तत्र दृष्टान्तः—"मखन्न"¶ यथा पुरा अराधसं मखम् एतन्नामानं भृगवोऽपहतवन्तः तथा अपहतेत्यर्थः ॥

"सुन्वानाय"-"सुन्वानस्य"—इति, "वष्ट"-"हृते"—इति च साम्न ऋचः पाठः ॥ ९ ॥ ८७

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्याष्टमः खण्डः ॥ ५ ॥

॥ इत्यानुष्टुभम् ॥

---

* "वाम्यः"—इति ऋषि-नै० ।

† "षष्ठ्यर्थे चतुर्थीति वाच्यम्( २, ३, ६२ )"—इति का० वा० ।

‡ "अधनं धन-रहितम्"—इति वि० ।

¶ 'हतामखम्"—इति मन्त्र-पाठस्य 'हता'—'मखम्'—इति पदकारस्य छेदः ।

जगत्योऽभिप्रियाणीति मुख्या द्वादश सम्मताः* ।
आद्यास्तिस्र ऋचो दृष्टाः कवि†नाम्ना महर्षिणा ।
उत्तरा विप्रकीर्णत्वाद्वक्ष्यन्ते ऋषयः पृथक्‡ ॥

अथ नवमे खण्डे—

सैषा प्रथमा ।

३ २ ३ १ २ ३ १ २ ३
अभिप्रियाणिपवतेचनोहितो
१ २ ३ २उ ३ १ २ १ २
नामानियह्वोअधियेषुवर्द्धते ।
१ २र ३ २ ३ १उ ३
आसूर्यस्यबृहतोबृहन्नधि
२ ३ १ २ ३ २
रथंविष्वञ्चमरुहद्विचक्षणः ॥ १ ॥ ८८ ¶

---

भगवान् सायणोऽपि तथैव व्याख्यातवान् । अत्र नये हतेत्याकारस्य द्व्यचोऽतस्तिङ इति (६,३, १३५) दीर्घं 'हता'—इति रूपम् ॥ विवरणकारस्तु 'हत'—'अमखम्'—इत्येवं छेदं स्वीकृत्य 'अमखं यज्ञ-बहिष्कृतम्'—इति व्याचख्यौ ।

* अत्र नवमे खण्डे अभिप्रियाणीत्याद्याः द्वादश ऋचः सम्मताः पूर्वाचार्य्याणामिति शेषः ।

† "कविः भार्गवः"—इति ऋषि नै० ।

‡ तत्र द्वादशसु आद्यास्तिस्र ऋचः कविनाम्ना महर्षिणा दृष्टाः । उत्तराः ऋचः नैकेन दृष्टा इति तत्र ऋषि-विप्रकीर्णत्वम् तस्मात् तत्र ऋषयः पृथग् वक्ष्यन्ते ।

¶ उ० १,१,१९,१=ऋ० ७,२,३३,१= आरण्ये २,१,६ ऊहे =१,१,१२—९,१,२—१४,१,१८—१६,१,१५—१९,१,१४=उह्ये १४,१,१—१४,१,१९ ।

२ ३ ५ १ २
ओम् ॥ (क्रावम् ॥) आभिप्रीर२३४या । णोपावार२३४
५ १र १र २ ३ ५ २ ३
ताइ । चानोह्विता२३ः । नामानी२३४या । क्रोअधी
५ १र १ ५ २ ३ ५ २ ३
२३४ये । षूवर्द्धताये३ । आह्वरी२३४या । स्यावृहा
५ १र १ २ २ ३ ५ २ ३
२३४ताः । बृहन्नधाये३ । राथंवा२३४इषा । चामाह्व
५ ३ २
२३४हात् । विचा३१उवा२३ । चा२३४णाः ॥ १ ॥

४ ४ ५ ३ ४ ५
(ऐडक्रावम् ॥) ए५ । अभिप्रिया२ । णिपवताइ ।
४ ४ र ५ ४ ४र र ५ ३र ४
ए५ । चनोह्विताः । ए५ । नामानीया२ । क्रोअधि
५ ४ ४ ५ ४ ४र र ५ ३
याइ । ए५ । षुवर्द्धताइ । ए५ । आह्वरिया२ । स्य
४ ५ ४ ४ ५ ४ ४ ५ ३ ४
वृहताः । ए५ । बृहन्नधी । ए५ । रथंविषा२ । चम
५ ४ ४ ५ ४
रुह्वात् । ए५ । विचक्षणाः । ह्वो५इ । डा ॥ २ ॥

५ र र र र ४ ५ १ २
(वाजसनि ॥) अभ्यौहोवाहाइप्रियाणी । पवता
३ ५ २ १ १र १ २ र र १
इचा२३४नो । ह्विताः । नामानियक्रोअधियेषुवर्द्धताइ ।

२र १ २ र १ २ १ २ १ २
आहूर्यस्यब्ृहतोबृहन्नधाइ। रथम्। वाइश्वञ्चमरुह्त्।
२ १ ११११
विचा३१उवा२३। चा३णा२३४५ः॥ ३॥

२ १ २र १ १
(वाजजित्॥) अभिप्रिया। णीपवताइ। होइहो
२ १२ ५र ४ ५र ४ ५ २र
वा३होये३४। चनोहिताः। हाहो। वाहाइ। ना
र १ २र १ १ २ १ २ ५
मानिया। ह्वोअधियाइ। होइहोवा३होये३४। धुव
४ ५र ४ ५ २र र १ २र १
ह्नताइ। हाहो। वाहाइ। आह्वरिया। स्याबृहताः।
१ २ १ २ ५ ४ ५र ४ ५
होइहोवा३होये३४। बृहन्नधी। हाहो। वाहाइ।
२ १ २र १ २ १ २ ५
रथंविष्वा। चामरुहात्। होइहोवा३होये३४। विच
४ ५र ४ ५ ५ २र१र २ १
क्षणाः। हाहो। वा६हाउ। वा। वाजीजिगी३वा
२३१॥ ४॥

२ १ २र १ २र १र
(वाजजित्साम॥) अभिप्रिया। णीपवताइ। चानो
१ १ २र र १ २र १
हिताः। होवा३होइ। नामानिया। ह्वोअधियाइ।
२र १ १ १ २र र १ २र १
धूवह्नताइ। होवा३होइ। आह्वरिया। स्याबृहताः।

२र १　　　२　१　　　२　१　　　२र १
बृहन्नधाइ । होवा३हो । रथंविष्वा । चामरुहात् ।
२र १　　　२　१　　　३　५र र　　　१र१र
वीचक्षणाः । होवा३हो२ । वा२३४औहोवा । वाजी
२र१र　२र　१ऽर　१ १ १ १ १
जिगीवाविश्वाधना२नी२३४५ ॥ ५ ॥

५ ४　　　२१र　　　२
( स्वारकावम् ॥ ) अभ्योवा । प्रियाणिपवताइ । च
र १　　　१र र　　　र　　　२ १
नोहाइता२ः । नामानियह्वोअधियाइ । षुवर्द्धीता२इ ।
१र र　　　२　१　　　१ २　४　५
आह्नर्यस्यबृहतो । बृहन्नाधी२३ । राथा३॰वाइषा ।
२　१　　　१　२　४
चमरुहा२३त् । वाइचा३क्षापूणा६५६ः ॥ ६ ॥ ८८

"चनोहितः" [चन इत्यन्ननाम* चायतेरसुनि चन इत्यौणादिक-सूत्रेण निपातितः] चनसेऽन्नाय हितः । यद्वा । हितान्नः सोमः "प्रियाणि" जगतः प्रीणयितॄणि नामानि नमनशीलानि तान्युदकानि "अभिपवते" अभितः क्षरति करोति । "येषु" अन्तरिक्ष-स्थितेषु उदकेषु "यह्वः" महानहं सोमः "अधि

* "यदीन्द्र प्रक्षितामीमानि चक्रीं चि चनो दधिष्व । चन इत्यन्ननाम"—इति नै० ६, १६ ।

अथ द्वितीया।

२ १२ ३ १ २ ३
अचोदसोनोधन्वन्त्विन्दवः

२ ३ १ २ ३ १ ३ १ ३ १ २
प्रस्वानासोबृहद्देवेषुहरयः।

१ १ ३ २ ३ २ ३ १ २ ३
विचिदश्नानाइषयोअरातयो

१ २ ३ १ २ ३ १ २
र्योनःसन्तुसनिषन्तुनोधियः॥ २॥ ८९*

२ र १ २र १
(आङ्गिरसानि त्रीणि॥) अचोदासोर२३। नोधनूवा

२र १ २ र १ २ १ २र
२३। तूइन्दवाः। प्रस्वानासोर२३। बृहद्दाइवे३३। षू

१ १ १ २र १ २र १र
हरयाः। विचिदाश्ना२३। नाइषायार२३ः। आरातयाः।

वर्द्धते" अधिकं प्रवृद्धो भवति। अपां मध्ये सोमो वसति खलु। अतः "बृहन्" महान् सोमः "बृहतः" महतः परिवृढस्य "बुध्नस्य"[०] "विष्वञ्च" विष्वगगमनं रथम् "अधि" उपरि[†] "विचक्षणः"[‡] विश्वस्य द्रष्टा सन् "आरुहत्" आरोहति। "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते(म० ३,७६)"—इति॥१॥ ८८

[०] ऋ० ७,३,४,१।

[†] 'अधि उपरि आदित्यमण्डलात् चतुर्थं मण्डलं रथं विष्टम्भं नाम'—इति वि०।

[‡] 'विचक्षणः विविधं प्रकाशयत इत्यर्थः'—इति वि०।

२ र १ २र १ २र १र २ १
अर्यौनाःसार२३। नूसनाइषार२३। नूनाधिया३१उवार-
१ १ १
३४५॥७॥

१ २र ३ २ २र ४ ५ ४ ५ १ २र
आचोदसो। नोधनुवन्तु। इन्दवाः। प्रास्वा
१र २ ३ ४ र र ५ ४ ५ १ २ ३ २ २र ४
नासो। बृहद्देवेषु। हरयाः। वाइचिदश्ना। नाइ
र ५ ४र ५ १ २र ३ २ ३ ४ ५ ४
षयोऽअ। रातयाः। अर्यौनःसो। तुसनिष। तुनो
पुधियाउ। वा॥८॥

२र र २ र र ऽर १ २ ४
हाउहोवा३हाइ। अचोदसोनो३धा। नुवा३न्तू
२ ३ १ १ १ १ १ २र र २ र र र
३। इन्दवा२३४५ः। हाउहोवा३हाइ। प्रस्वानासोवृ३
१ २र ४ २ ३ १ १ १ १ १ २र र २
३हात्। देवे३षू३। हरया२३४५ः। हाउहोवा३हाइ।
र ऽर १ २ ४ २र २ १ १ १ १ २र
विचिदश्नाना३आइ। षयो३आ३। रातया२३४५ः। हा
र २ र १ २ ४ २र
उहोवा३हाइ। अर्योनःसन्तू३सा। निषा३न्तू३। नोधि
१ १ १
या३२उवा३४५॥९॥

५ ४ १ र र २
(सामराजम् ॥) अचोह्वाइ। दासोनोधनुवा। तु

१ १ र र र र २ १ २
इन्दावा२ः। प्रस्वानासोबृहद्देवाइ। पुहरायार२ः। वि

५ २ ५ २र २
चो२३४ह्वाइ। अश्नो२३४ह्वाइ। नाइषयः। अरो२३४

५ १ २ ३ ५ ३ ५ २
ह्वाइ। तायाः। अर्यो२३४ह्वाइ। नःसो२३४ह्वा। तू

३ ५ १ ऽ २ ५
सानी२३४षा। तूनाइउवा३। धी२३४याः॥ १०॥

५ र ४ ५ १ र र
(सामराजम् ॥) अचौहोवा। दासोनोधनुवाः।

२ १ १ र र र र २ १
तुइन्दावा२ः। प्रस्वानासोबृहद्देवाइ। पुहरायार२३ः।

१ २ ४ ५ २ ३ ५ २ १ २ ३
वाइचीरदाश्ना। नाइषार२३४या। होइ। अरोतार

५ ३ १ २ ४ ५ २ ३ ५
३४याः। हो३इ। आर्यो३नाःसा। तूसानी२३४षा।

२ ३ २ ४
हो। तुनो३धा५याइ५६ः॥ ११॥

५ र ४ ५ १ र
(सिमानांनिषेधः॥) अचो। वाह्वाइ। दासो

र २ १ १ र र र र २
नोधनुवा। तुइन्द्२ावाः। प्रास्वानोसोबृहद्देवाइ। पुह

१   १ २   १   २   १र ४
राया२३ः। वा२३इचीत्। आ२३। आ३४। नाइ

३ ४र ५र   २ २   १ २   १ २
षयोअरा। ता३याः। आ२३याँ। ना२३ःसा३४।

३ ४ ५   ३ २ ४
तुसनिष। तुनो३धा५याई५ईः ॥ १२ ॥ ८९

"अचोदसः"* अचोदनाः अनन्यप्रेरिताः "इन्दवः" सोमाः "नः" अस्माकं† "प्रधन्वन्तु" प्रगच्छन्तु [ धन्वतिर्गति-कर्मा‡ ]। कुत्र? "बृहद्देवेषु हरयः" प्रभूत-देवयुक्तेषु यज्ञेषु [ यथा वा बृहद्देवकुलजेषु मध्यते इति सम्बन्धः ] कीदृशा इन्दवः? "स्वनासः" सूयमानाः "हरयः" हरितवर्णाः¶। किञ्च। "अरातयः" धनादि-दान-रहिताः "नः" अस्माकम् "अर्यः"§ अरयः "इषयः" इषोऽन्नानि इच्छन्तः "अश्नानाः"‖ अशनेन भोजनेन वियुक्ता एव सन्तु। किञ्च। नोऽस्माकं "धिया" कर्माणि देव-विषयाणि स्तोत्राणि+ "सनिषन्तु" देवान् सम्भजन्तु ॥

---

* 'चोदयति'—इति वि०।

† 'नः अस्मान्'—इति वि०।

‡ निघ २,१४,६४।

¶ 'हरयः हरणशील.'—इति वि०।

§ 'अर्यः स्वामिनः'—इति वि०।

‖ 'अश्नानाः विनाशयन्त'—इति वि०।

+ 'धियः कर्माणि प्रज्ञा वा'—इति वि०।

अथ द्वयीया।

३ १२ ३ १ २ ३
एषप्रकोशेमधुमाँ अचिक्रद-
१ २ ३ २ ३ १ २ ३ १ २
दिन्द्रस्यवज्रोवपुषोवपुष्टमः।
३ २ १ ३ ३ १ २ ३ १ २
अभ्यृ३तस्यसुदुघाघृतश्चुतो
३ १ २ ३ १ २ ३ १ २
वाश्राअर्षन्तिपयसाचधेनवः॥ २ ॥ ९०*

(वासिष्ठम्॥) एषप्रकोशे२। म। धुमाँ२।
अचाइक्रा२३४दात्। इन्द्रास्यवाज्रा२ः। पुषो२। व
पुष्टा२३४माः। अभाऋतास्या२। सु। दुघा२ः। घृ
ताश्चू२३४ताः। वाश्राअर्षान्ती२। प। यसा२३।
चधा३इनापूवाईपूई॥ १३ ॥ ९०

"देवेषु"—"दिवेषु" इति पाठौ॥ "विचिदश्माना इषयो अरातयोर्या नः सन्तु सनिषन्तु नः धिया"—इति छन्दोगाः। "विचिनशश्व इषो अरातयोर्यो नः सन्तु सनिषतनो धिया" बह्वृचाः॥ २॥ ८९

* ऋ० ७,३,१,१।

अथ चतुर्थी।

१ १ १ २ ३ १ २ ३ २उ
प्रोअयासीदिन्दुरिन्द्रस्यनिष्कृतꣳ
३ १ ३ १र २र ३ १ १
सखासख्युर्न्नप्रमिनातिसङ्गिरम्।

"एषः" अयं सोमः "मधुमान्" मधुर-रसः "कोशे" द्रोण-कलशे "प्राचिक्रदत्" प्रकर्षेण शब्दायते। कीदृश एषः? "इन्द्रस्य" "वज्रः" वज्रस्थानीयः बलकरत्वेन वज्रवत् प्रहरण-साधनत्वाद् वज्रत्वोपचारः*। "एषः" एव हि सोमः "वपुषः" बीजानां वप्तुरन्यस्मात् "वपुष्टमः"† अतिशयेन वप्ता। बीजावापस्य सोम-कर्तृकत्वात् [सोमो वै रेतोधा इति श्रुतेः]। "ऋतस्य" सत्यफलस्य सोमस्य धारा इति शेषः। ता "अभ्यर्षन्ति" अभि गच्छन्ति‡। कीदृश्यः? "सुदुघः" सुष्ठु दोग्ध्र्यः फलानाम्। "घृत-श्चुतः" उदकस्य रसस्य वा क्षारयित्र्यः "वाश्राः" शब्दयन्त्यः¶। पयसा युक्ता वाश्रा धेनव इव§ लुप्तोपममेतत्॥

"वपुष्टमः"-"वपुष्टरः"—इति, "अभ्यृतस्य" "अभीमृतस्य"—इति, "पयसा च धेनवः"-"पयसेन धेनवः"—इति च छन्दोग-बह्वृचानां पाठः॥ ३॥ ९०

* 'प्रीते वज्रं क्षेप्तुं समर्थः'—इति वि०।

† 'दीपिततरः'—इति वि०।

‡ 'अर्षन्ति चरन्ति'—इति वि०।

¶ वाश्राः कामयमानाः'—इति वि०।

§ 'चरन्ति पयः धेनव आदित्यरश्मयश्च'—इति वि०।

१ २ ३ २ ३ १ २ ३
मर्यइवयुवतिभिःसमर्षति

१ २ ३ १ २ ३ १ २ ३ २
सोमःकलशेशतयामनापथा ॥ ४ ॥ ९१ *

(लौशम् ॥) प्रोयार२३४सीत्। इन्दुरिन्द्रार२३। स्या
इनिष्कृतम्। सखासख्युः। नप्रमिनार२३। तीइसङ्गि
रम्। मर्यइव। युवतिभार२३इः। साइमर्षति। सोमः
कला। शेशतयार२३। मनाइपापथा६५६ ॥ १४ ॥

(उत्तरलौशम् ॥) प्रोयासीदिन्दुरिन्द्रस्यनिः। कृता
म्। कृतार२३४५म्। सखा३१२३४। सख्युर्नप्रमिना
तिसम्। गिराङ्गिराम्। मर्या३१२३४ः। इवयुवतिभिः
सम। षताइषताइ। सोमा३१२३४ः। कलशेशतया।
मनाइपापथा६५६ ॥ १५ ॥

---

१ उ० ४,२,७,२ = ऋ० ७,३,१५,१ = ऊहे ४,१,७—६,२,१०—७,२,११—१०,१,५—१२,२,१५—१३,२,१८।

२र १र   २ १
(प्रवङ्गार्गवम् ॥) प्रोअयासाइत् । इन्दुरिन्द्रा । स्या
१   २ र १   २ १   १
२निष्कृताम् । सखासख्यूः । नप्रमिना । ता२इमङ्गि
२ १   २ १   १   २र
राम् । मर्यईवा । युवतिभाइः । सा२मर्षताइ । सो
१   २र १   १र २   १ १ १ १
मः कला । शेशतया । मा२नापथार१उ । वा२३४५ ॥
॥ १६ ॥

२र १र   २ १   २र
(तन्त्रम् ॥) प्रोअयासाइत् । इन्दुरिन्द्रा । स्या
१   २र ३ ५   ३ २ ३ ५र   ३ २ ३
निष्कृता२३म् । सखासख्युः । नप्रामिना । तिसङ्गा
५   २ १   २ १   २र १   २
२३४इराम् । मर्यइवा । युवतिभाइः । सामर्षताये३ ।
र २ ३ ५   ३र २ ३ ५र   ३ २ ४
सोमःकला । शेशातया । मना३पा५था६५६ ॥ १७ ॥

१   र र ७
(यामम् ॥) आ२इ । इया । प्रोअयासाइदिन्दु
४ २ ३ ५   १ र   ७
रिन्द्रा२३ । स्या३निष्कृतम् । सखासख्युर्न प्रमिना-
४ २ ३ ५   १   ७   ४ २
२३ । ती३सङ्गिरम् । मर्यइवायुवतिभा२३इः । सा३म

३ ५   १   र   २
र्षति। आ२इ। इया। सोमः कलाशे१शतया२३।

२ ४
मनाऽ३पा५थाई५६ ॥ १८ ॥ ९१

ऋषिगणऋषिः*। "इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थान मुदरं "प्रो अयासीत्" प्रकर्षेणैव गच्छति। गत्वा च "सखा" सखिभूतः सोमः "सख्युः" इन्द्रस्य "सङ्गिरं" सम्यग्गिरणाधारभूत मुदरं† "न प्रमिताति" न हिनस्ति। किञ्च। सः "मर्य इव"‡ "युवतिभिः" मर्त्यो यथा तरुणीभिः सह सङ्गतो भवति तद्वत् अय मपि सोमो युवतिभिर्मिश्रणशीलाभिर्वसतीवरीभिरद्भिः सह "समर्षति" सङ्गच्छते अभिषवकाले। स च सोमः "शतयामना" याम्ना अनेकया मनसाधनच्छिद्रोपेतेन "पथा" मार्गेण दशापवित्रसम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः। यद्वैकमेव वाक्यम्। यथा मर्यो युवतिभिः सह सङ्गच्छते एवं कलशे शतयाम्ना पथा सङ्गच्छतेऽद्भिः॥

"शतयामना"-"शतयाम्ना"—इति पाठौ ॥ ४ ॥ ९१

---

*"सिकतानिवारौ"—इति ऋषि-मे०।

† 'सङ्गिरं सुतम्'—इति वि०।

‡ 'निष्कृतं समवायम्'—इति वि०।

¶ 'मर्य्याः'—इति मनुष्यनामसु एकादशं मैघण्टुकम् २,३। "छन्दसिनिष्टर्क्य (पा० ३,१,१२३)"—इत्यादिना सिध्यति मर्यइति।

अथ पञ्चमी ।

३ २ ३ १ २ ३ २ ३ २ ३
धर्त्ता दिवः पवते कृत्व्यो रसो

१ २ ३ १ २ ३ २ ३ १ २
दक्षो देवानामनु माद्यो नृभिः ।

१ २ ३ २उ ३ १र २र ३
हरिः सृजानो अत्यो न सत्वभि

२ ३ १ २ ३ २
र्वृथा पाजाꣳसि कृणुषे* नदीष्वा ॥ ५ ॥ ९२†

२ १ २ ४र
( वात्सप्रिरसौ द्वे ॥ ) धर्त्तादाइवा३ । ओवा५ए ।

२ र १ २ ४र २ १ २
पवतेक्रत्वौ३योरासा३ । ओवा५ए । दक्षोदाइवा३ ।

४र २र र १ २ ४र २
ओवा५ए । नामनुमादौ३योनभा३ । ओवा५ए । ह

१ २ ४र २र र १ २
राइःसार्जा३ । ओवा५ए । नोअतियोना३सात्वाभा३ ।

४र २ १ २ ४र २
ओवा५ए । वृथापाजा३ । ओवा५ए । सिक्रुणुषाइन

१ २ ४र ४
दाइषूवा३ । ओवा३ए । द्वौ५इ । डा ॥ १९ ॥

---

* "कृणुते"—इति ऋग्वेदीय-पाठः ।

† उ० ५,१,१२,१ = ऋ० ७,३,१,१ = आरण्ये १,२,४—१,२,२५—१,२,२६—१,२,२७—१,२,२८ = ऊहे ४,२,१४— ९,१,१६—१५,१,१५—१७,१,१०—२२,२,१६—२९,२,१९ = ऊह्ये ३,१,१०—४,१,४ ।

५र र ४ ५ २ १ २ ३र ५
धर्त्ता औहोहोहाइ। दिवः। पवतेका। औहो३
२ २ १र र २ ३र ५ २
हा३। हा। त्वियोरसों। दक्षोदेवा। औहो३हा३।
२ १र २ १र २ ३र
हा। नामनुमा। दियोनृभाइः। हराइःसार्जा। औ
५ २ २ १र २ १ र
हो३हा३। हा। नोअतियो। नसत्वभाइः। वृथापा
२ ३र ५ २ २ १ २ ३र ५ २
जा। औहो३हा३। हा। सिक्तणूषा। औहो३हा३।
२ ३ र २ १ २र ५ २ २ ५र र
हाइ। नदीषुवा। औहो३हा३। हा३४। औहोवा।
१ ३ १र २
ए३। नदीषुवा१ ॥ २० ॥ ९२

कविऋषिः*। "धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थिताद्दशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "क्रत्वः" कर्त्तव्यः शोध्य इत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः†" बलप्रदः। यद्वा। दक्षः प्रवर्द्धनीयो देवाना

* "भार्गवः"—इति ऋति-नै०।

† 'दक्षः शीघ्रः'—इति वि०। "दक्षः"—इति बलनामसु नवोदशं नैघण्टुकम् २,९।

अथ षष्ठी ।

१ २　२ १ २　　३ २उ
वृषामतीनाम्पवतेविचक्षणः
३ १ २　३ १र २र　३ २
सोमो अह्ना*म्प्रतरीतोषसा†न्दिवः ।
३ १र　२र ३ १ २　　२
प्राणासिन्धूनांकलशाᳪ᳭अचिक्रद
१　२ ३ १　२　३ १ २ ३ १ २
दिन्द्रस्यहार्द्याविशन्मनीषिभिः ॥ ६ ॥ ९३ ‡

मर्याय । तथा "नृभिः" नेतृभिर्ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा । "हरिः" हरितवर्णः । "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न"¶ अश्व इव स यथाश्रितोऽनसेन गच्छति तद्वत् । "वृथा" अप्रयत्नेन "पाजांसि" बलानि§ स्वीयान् वेगान् "कृणुते" कुरुते "नदीषु"॥ वसतीवरीषु ताभिरित्यर्थः । प्रसिक्त इत्यर्थः । अथ मभिषव-समयाभिप्रायः+ ॥ ५ ॥ ९२

* "अह्नः"—इति }
† "उषसो"—इति } ऋग्वेदीय-पाठौ ।

‡ उ० ३,१,१७,१ = ऋ० ७,२,१५,४ = ऋक्वे ९,१,१०—८,१,५—१६,१,१७ = ऋक्वे ४,१,१ ।

¶ "अत्यः"—इति अश्व-नामसु प्रथमं नैघण्टुकम् १,१४ ।

§ 'पाजांसि अन्नानि'—इति वि० । "पाजः"—इत्यन्ननामसु पाठभेदेन तृतीयं नैघण्टुकम् ( २,१ )—बलनामसु च द्वितीयम् ( २,९ ) ।

॥ 'नदीषु रश्मिषु'—इति वि० ।

+ 'योगोऽस्याद्दमेऽहनि'—इति वि० ।

२र १ २र १
(ऐडयामम्॥) वृषामातीर२३। नापवातार२३इ।

२ २ २र र १ २ १
ए३। विचक्षणए३। सोमोआक्रार२३म्। प्रतराईतार

२ २ र २र र १ २र
३। ए३। उषसान्दिवए३। प्राणासाइन्धूर२३। नाक्क

१ २ २ २ १
लाशा२३। ए३। अचिक्रददे३। इन्द्रस्याहार२३।

२र १ २ २र १
दियावाइआर२३न्। ए३। मनिषिभिरे३४३। ओ२३४५

इ। डा॥२१॥

१२र र १र २
(याम॥) वृषामतीनाम्पव। ताइवा१इचार२३४।

५ ३ ११११ १र २र १ २र१ २र १२
। च। णार२३४५:। सोमोअक्रामृतरी। तोषा१सार२३४

५ २११११ २र १र २र र १
म्। दि। वार२३४५:। प्राणासिन्धूनाकल। शा

२ ५ २ ११११ १ २ १र
आ१चार२३४इ। क्र। दार२३४५त्। आइन्द्रस्यहार्दि

र ३ ५ १११
यावि। शान्मा१नार२३४इ। षिभाऽ२उ। वा३४५॥२२॥

१　१　१र　र२१　२　१र
वृषा२मता२इ। नाम्पवतेविचक्षा२३णाः। सोमो
१　१　२र　२१र　२　१र　१
२अक्का२म। प्रतरीतोषसान्दा२३इवाः। प्राणा२सि
१र　र　२१　२　१　१
न्धू२। नाङ्कलशा२ँअचिक्रा२३दात। इन्द्रा२स्यहा२।
१र　१　१र　२　१
दियाविशन्मनीषा२३इभा३४३इः। ओ२३४५इ। डा॥

॥२३॥९३

त्रिगण ऋषिः*। अयं "सोमः" "पवते" अभिषूयते†। कीदृशः सोमः? "मतीनां" मतयः स्तोतारस्तेषां‡ "वृषा" वर्षकः कामानाम्। "विचक्षणः" विद्रष्टा¶ "अक्काम्" उषसां "दिवः" द्युलोकस्यादित्यस्य वा "प्रतरीता" प्रवर्द्धयिता§। किञ्च। "सिन्धूनां" स्यन्दमानाना मुदकानां॥ "प्राणा" [प्रकर्षेण अनिति चेष्टते इति प्राणा] कर्त्ता सोमः "कलशान्" "अचिक्रदत्" धारया अध्वनयत् प्रवेष्टुम्। यद्वा। "सिन्धूनां" [तृतीयार्थे षष्ठी]

* "कविः भार्गवः"—इति ऋषि–नै०।

† ग्रहपात्रेषु चरते इत्यर्थः।

‡ "मतीनां प्रज्ञानाम्"—इति वि०। "मतयः"—इति मेधावि-नामसु च द्वाविंशतितमं नैघण्टुकम् ३,१५।

¶ "विचक्षणः विविधं प्रकाशयिता सोमः"—इति वि०।

§ 'प्रतरीता प्रकर्षेण तारयिता'—इति वि०।

॥ "सिन्धवः"—इति नदीनामसु एकत्रिंशत्तमं नैघण्टुकम् १, १३।

अथ सप्तमी।

१ २ ३१२११२
त्रिरस्मैसप्तधेनवोदुदुह्रिरे
३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि।
३ २ ३ १र २र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे
१ २ ३ २३१र २र
चारूणिचक्रेयदृतैरवर्द्धत ॥ ७ ॥ ९४ *

१ ५र ४ ५र ४
( मरुतान्धेनुसाम ॥ ) त्रा२३४इ:। त्रस्मैसप्तधेन
४र र ४ ५ २ १र र २ र
वोदुदौ। होह्राइराइ। सत्यामाशिरम्परमाइ। वियो

सिन्धुभिरद्भिः "प्राणा" [ प्रा पूरणे ( अ० प० ] पूर्णः "सोमः" कलशान् "अभि" लक्ष्य क्रन्दते। किं कुर्वन्? इन्द्रस्य "हार्दि" हृदयम् "आविन्" प्रविशन् "मनीषिभिः" मनसईशित्रीभिः स्तुतिभिः सहेति शेषः [यद्वा। व्यवहितमपि मनीषिभिरित्येतत् पवतइत्यनेन सम्बध्यते †॥

"प्राणा"—इति, "क्राणा"‡—इति, "अचिक्रदद्"—"अवीविशत्"-इति पाठाः॥ ६ ॥ ९३

---

* उ० ६,२,१०,१=ऋ० ७,२,२२,१ = अष्ट ८,१,१२।

† 'विनियोगोऽस्य तृतीयेऽहनि'—इति वि०।

‡ क्राणाः—इत्यस्य कुर्वाणा इत्यर्थः श्लोकतो यास्केन न० ४, १९।

१   १२   २   २   १   २
मानी२। चत्वार्यन्याभुवना। निनिर्णाइजा२३इ। चा

२   ५   २र१   २र   १   २   ४
रूणा२३४इचा। क्रे यद्दतैः। आवा३र्द्धाृतार्६५६ ॥२४॥९४

रेणुर्ऋषिः*। "अस्मै" पवमानाय "परमे" उत्कृष्टे "व्योमनि" [ विविधं ओम अवनं गमनं देवाना मत्रेति]व्योमा यज्ञः तस्मिन् स्थिताय। यद्वा। परमे व्योमन्यन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्याम्" यथार्थभूतं "आशिरम्" आश्रयण-साधनं क्षीरादि "दुदुह्रिरे" दुहन्ति [ यद्वा। त्रिःसप्त=द्वादश मासाः—पञ्चर्त्तवः—त्रयइमे लोकाः—असावादित्य एकविंशइति। एतैः सर्वैः सह गोषु पय उत्पाद्यते तद्भावो दुहन्तीति ]। किञ्च। अयं सोमः "अन्या" अन्यानि चत्वारि "भुवना" उदकानि वसतीवरीस्तिस्रश्चैकधना इति तानि चतुःसङ्ख्यानि† "चारूणि" कल्याणानि "निर्णिजे" निर्णेजनाय परिशोधनाय परिपोषणाय वा "चक्रे" तदा करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैः "अवर्द्धत" वर्द्धितवान् तदा करोति ‡।

"दुदुह्रिरे"-"दुदुह्रे"—इति, "परमे"-"पूर्व्ये"—इति च पाठः ॥ ७॥ ९४

* "वैश्वामित्रः"—इति ऋषि-नि०।

† वसतीवरीसञ्ज्ञाना मपा माधार एको घटः, एकधन-नामकाश्च त्रयः। तत्र वसतीवरी-घटोदकेनाभिषुतसोमरसस्य वर्द्धनं भवति, एकधनघटानाम्, सोमाभिषवे उपयोगः।

‡ विनियोगोऽस्याभिप्लवे। अस्मै सोमाय। सप्त धेनवः सप्तच्छन्दांसि। त्रिः=प्रातःसवन-]

अथाष्टमी।

१ २ ३ १ २ ३ १ २ ३ १ २र
इन्द्रायसोमसुषुतःपरिस्रवा

२र ३ १ २ ३ १
पामीवाभवतुरक्षसासह।

३ १ २ ३ १ ३
मातेरसस्यमत्सतद्वयाविनो

१ २ ३ १ ३ १ २
द्रविणस्वन्तइहसन्त्विन्दवः॥ ८ ॥ ९५ *

* उ० ७,३,१०,१।

माध्यन्दिन-तृतीयसवनेषु दुदुह्रिरे। अथवा त्रिसृभिः सवनैः सप्त धेनवः सप्ताहोरात्रा वषट्कारिणः होता मैत्रावरुणः ब्राह्मणाच्छंसी पोता नेष्टा अच्छावाक अग्नीध्रः। एतेषां वाचः दुह्यन्ते। अथवा धेनवः दुह्यन्ते सत्या माशिरम्। आग्रयणीयं मिश्रणं वा परमे प्रकृष्टे व्योमनि स्थाने यज्ञे वा। चत्वारि अत्यग्निष्टोम उक्थः षोड़शी अतिरात्रश्चतुर्थः। अथवा पृथिवी अन्तरिक्षं द्यौर्दिश इति। अथवा चत्वारो वेदाः। अथवा चत्वारो महर्त्विजः। अथवा चत्वारः समुद्राः। भुवनानि निर्णिजे चतुर्दश भुवनानि सप्त भूरादयो लोकाः सप्त पातालानि तान्यपि चारूणि चक्रे कृतवान्। केन प्रकारेण मयतः कृतैः रत्नैः यज्ञैः सत्यैर्वा अवर्द्धत। अथवा तत् तस्मै सप्त धेनवः सप्त रश्मयः। दुदुह्रिरे। अथवा सप्ताश्वाः। अथवा सप्त पावकजिह्वाः। सप्त मातरो वा सप्त भूरादयो लोकाः। सप्त पातालानि सप्त सोमसंस्थाः सप्त समुद्राः सप्त द्वीपानि सप्त स्वराः। एता दुदुह्रिरे सप्त। आशिरम् उदकं परमे व्योमनि। चत्वारि अन्याः भुवनानि पृथिव्यादीनि चारूणि चक्रे। यत् कृतैः यज्ञैः अवर्द्धतेत्यथवा त्रिः अस्मै सप्त धेनवः सप्त प्राणाः शीर्षण्या इति त्रिः उत्पत्ति-स्थिति-प्रलयेषु स सत्याम् अवितथाम् आशिरं ज्ञानं चत्वारि भुवनानि जाग्रत्-स्वप्न-सुषुप्ति-तुरीयाख्य अद्वैतावस्थं नित्याम् तैर्जनैः अवर्द्धत विश्वानाय''—इति वि०।

२ १  १२  ४ २ ३
(अपामीवम् ॥) इन्द्रा। यसोमसुषुता३ःपा३रिस्र
५ २१ २१ २  ४ २१ २ ३  २१ १
व। अपा। मीवाभवतुरा३त्वा३सासह। माताइ।
२  ४ २१ ३ ५  २१  २
रसस्यमत्सता३दा३याविनः। द्रवाइ। णस्वन्तइहसं।
३ २ ४
तुवा३इन्दा५वा६५६ः॥ २५॥

२ १ २ ४ ५ ४ ५ २  ४
(वायोरभिद्रः॥) इन्द्रायसोमसुषुतःपर्यौ॥ स्वोइस्वा
५ १ २ २ २  २ १ २  १२ २
वा। अपामोवाभवतुरक्षसा१सा३हा। मातेरसस्यमत्स
२ २ २ ३ ५ २ ५ १ २ ३ २
तदया१वी३नो। द्रा२३४वा। णा२३४स्वा। ताइहसा
१ २ ४
३। हा२३। तुवा३इन्दा५वा६५६ः॥ २६॥ ९५

वेनोभार्गवऋषिः। हे "सोम!" त्वं "सु षुतः" सन् "इन्द्राय" तदर्थं "परिस्रव" परितो गच्छ रसं मुञ्च। "अमीवा" रोगः "रक्षसा सह" "मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह" "अप भवतु" अपगतो वियुक्तो भवतु "ते" तव "रसस्य" स्वांशं रसं पीत्वा "मा मत्सत" मा माद्यन्तु। के? "द्वयाविनः" द्वयं सत्यानृतं तेन युक्ताः पापिन इत्यर्थः। किञ्च "इन्दवः" ते रसाः

अथ नवमी।

१ २ ३ १ २ ३ २उ ३ २१
असाविसोमोअरुषोवृषाहरी

१ २ ३ १ २ ३ १र १र
राजेवदस्मोअभिगाअचिक्रदत्।

३ २उ ३ १ २ ३ १ २ ३ १र
पुनानोवारमत्येष्यव्ययꣳश्येनो

१र ३ १ २ ३ १ २
नयोनिङ्घृतवन्तमासदत्॥ ८॥ ९६ *

(सामानि त्रीणि॥) असाविसो। मोअरुषो२३४।
वृषाहराइः। राजेवदा। स्मोअभिगा२३४ः। अचिक्र
दात्। पुनानोवा। रामतिया२३४इ। षिअव्ययाम्।
श्येनोनया। निङ्घृतवा२३। तमा५सदात्। हो५इ।
डा॥ २७॥

"इह" अस्मिन्यज्ञे "द्रविणस्वन्तः" अस्माकं धनवन्त "सन्तु" भवन्तु †॥ ८॥ ९५

---

* उ० ५,१,१३,१ = ऋ० ७,३,७,१ = जहे ५,२,८—८,१,१—१७,१,४—१९,१, १७—२३,१,१० = ऊह्ये १,१,८।

† 'रसवन्तो भवन्तु देवानां न तु राक्षसादीनाम्'—इति वि०।

आसावीर२३४सो। मोअरू२३४षाः। वार्षाहराये
३ः। राजेवा२३४दा। स्मोअभी२३४गाः। आचिक्रदा
२३त्। पूनानो२३४वा। रामातो२३४ये। षीअव्यया
२३म्। श्येनोना२३४ये। निङ्कार्त्ता२३४वा। तमा३।
सा२दा२३४औहोवा। हे३। हिवी२३४५॥ २८॥

असाविसोमोअरुषोवृषाह। राइः। राजेवदस्मो
अभिगाअचिक्र। दात्। पुनानोवारमत्येष्यव्य। याम्।
श्येनोनयोनिङ्कृत। वा। तमा३। सा२दा३२३४औ
होवा। ए३। हिवी२३४५॥ २९॥ ९६

भरद्वाजो वसु ऋषिः। "सोमः" "असावि" अभिषुतोऽभूत्।
कीदृशः सोमः? "अरुषः" अरोचमानः* "वृषा" वर्षकः "हरिः"

---

* 'अरुषः अहिंसितः'—इति वि०। "अरुषम्"—इति रूपनामसु पञ्चदशं नैघण्टुकम् ३,७।

अथ दशमी।

१ २उ ३ १२ ३ २ ३ १
प्र देवमच्छा मधुमन्त इन्दवो

२ ३ २ ३ २उ ३ १ २
सिष्यदन्त गाव आ न धेनवः।

३ १ २ ३ १ २ ३ १ २
बर्हिषदो वचनवन्त ऊधभिः

३ १ २ ३ १ २ ३ १ २
परिस्रुतमुस्त्रिया निर्णिजन्धिरे॥ १०॥ ९७*

हरितवर्णः†। स च "राजेव" "दस्मः" दर्शनीयः सन् "गाः" उदकानि‡ "अभि" लक्ष्य "अचिक्रदत्" शब्दङ्करोति स्व-रस-निर्गम-समये। पश्चात् "पुनानः"पूयमानः "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि"¶ हे सोम! अतिक्रम्य गच्छसि। ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम् § "आसदत्" वसतीवरीष्वासीदतीत्यर्थः ‖॥

"अत्येषि"-"पर्येति"—इति, "आसदत्"-"आसदम्"—इति च पाठः॥ ९॥ ९६

---

* ऋ० ७,२,१९,१।

† 'हरिः हरणशीलः'—इति वि०।

‡ इह भाष्यं त्रुटितम्।

¶ 'अत्येषि अत्येति व्यत्ययेन'—इति वि०।

§ "घृतम्"—इति उदकनामसु दशमं नैघण्टुकम् ११२।

‖ 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

४ ५ २१ २१ १ २
(मरुतान्धेनु॥) प्रादे। वमच्छामधुम। तआ२-

१ २ २ ५ २ १र २र
इन्दवाः। आसिष्या२३४दा। तगावआ। नधा२इन

१ २ ३ ५ २ १र ५र १
वाः। बर्हिंषा२३४दाः। वचनावा२। तऊ२धभाइः।

२ ३ ५ २ १ र २
पारिस्रु२३४ताम्। उस्रियानिर्णिजन्धाइरायेड। धाइ

२ ५र र २ १११११
रा३४औहोवा। धा३इरा२३३५इ॥ ३०॥ ९७

वत्स ऋषिः*। "मधुमन्तः" मदकर-रस-युक्ताः "इन्दवः" सोमाः "देवं" द्योतमानं सोमात्मकम् इन्द्रम् "अच्छ" प्रति "प्रासिष्यदन्त" परिस्यन्दन्ते ग्रहादिषु † प्रचरन्ति। [ स्यन्दते-र्ण्यन्तस्य लुङि चङि रूपम्] तत्र दृष्टान्तः। "गाव आ न धेनवः" पयस्विन्यः प्रीणयित्र्यः गावो यथा वत्सं प्रति पयांसि प्रस्रवन्ति

* "वत्सप्रीः भालन्दनः"—इति ऋषि-नै०।

† यज्ञीयदेवानुद्दिश्यांशभागेऽटृहीतसोमा तदाधारत्वात्तदीयचुद्रघटादयोऽपि ग्रहा उच्यन्ते। ते च प्रातःसवने, पञ्चविंशति-सङ्ख्याका भवन्ति। तथाहि—१२उपांशुः —२अन्तर्याम:—३ऐन्द्रवायवः—४ मैत्रावरुण:—५ आश्विनः—६ शुक्रः—७ मन्थी—८ आग्रयणः— ९उक्थ:— १०ध्रुवः—११-२३ऋतुग्रहाश्च त्रयोदश—२४ऐन्द्राग्नः—२५वैश्वदेवश्चेति। माध्यन्दिनसवने चत्वारि—तत्र, मारुत्वतीयास्त्रयो माहेन्द्रश्च चतुर्थः। तृतीयसवने तु पञ्च, तद्यथा—१आदित्यः—२सावित्रः—३महावैश्वदेवः—४पात्नीवतः—५हारियोजनश्चेति।—इत्येवं सङ्कलनया ग्रहाश्चतुस्त्रिंशदिति।

अथैकादशी ॥

१ २ ३क२र ३ १ २ ३
अञ्जतेव्यञ्जतेसमञ्जते

१ २ ३ २ ३क २र
क्रतुꣳरिहन्तिमध्वाभ्यञ्जते ।

१ २ ३ २ ३ १ २ २ १ २
सिन्धोरुच्छ्वासेपतयन्तमुक्षणꣳ

३ १ २ २ ३ १ २
हिरण्यपावाःपशुमप्सुगृभ्णते ॥ ११ ॥ ९८ *

२ १ २ १ २
( शागानि त्रीणि ॥ ) अञ्जताइ । वियञ्जताइ । सम

१ १ २र १ २ १
ञ्जाता२इ । क्रतुꣳरिहा । तीमधुवा । भियञ्जाता

तद्वत् । किञ्च । "बर्हिषदः" बर्हिषि सीदत । "वचनवन्तः" हम्भा-रवादि-शब्दवन्तः [उस्त्रियेति गोनाम † ] तादृश्यो गावः ऊधभिः पयआधारकैः स्वैः स्वैरूधोभिः तेभ्यः "परिस्रुत" परितः स्रवणशीलं "निर्णिजं" शुद्धं पयोभूतं सोमरसं "धिरे" दधिरे इन्द्रार्थं धारयन्ति ॥ १० ॥ ९७

* उ० ७,२,११,१ = ऋ० ७,२,२०,२ = ऊहे ११,१,१७ ।

† "उस्त्रिया"—इति गोनामसु तृतीयं नैघण्टुकम्-२,११ ।

२ १ २र १ २ १
ऽ२इ। सिन्धोरुच्छ्वा। सेपतया। तमुच्चाणा२म्। ह्विर
१ २र १ २र १ २ १ १ १ १
ण्यपा। वाःप्रुमा। ण्सगृभ्णता२१उवा२३४५ ॥ २१ ॥

३ २ १ २ १ २ ४ २ ३ ५
अञ्जा३हो। ते३होइ। वियञ्जते३सा३मञ्जताइ।
३ २ १ ३ २ १ २ ४ २ ३ ५
क्रतू३ऽ्होइ। रिहा३हो। तिमधुवा३भी३अञ्जताइ।
३ २ १ ३ २ १ २र ४ ३ ३ ५
सिन्धों३होइ। उच्छा३हो। सेपतया३न्ता३मुच्चणम्।
३ २ १ ३ २ १ २र ३ २ ४
ह्विरा३हो। ण्यपा३हो। वाःपप्रुम्। ण्सुगा३भ्णा५
ता६५६इ ॥ २२ ॥

४ ५ १ ३ ४ ५ र ३ ४ ५ र १ ३ २
हावाञ्ना। ता२३४इ। वियञ्जतेसमञ्जते। एह्विया।
१ ३ २ ५ १ ३ ४ र ३
एह्विया३४। हाउक्रातूम्। रा२३४इ। हन्तिमधुवाभि
४ ५ र १ ३ २ १ ३ २ ५ १
यञ्जते। एह्विया। एह्विया३४। हाउसाइन्धोः। ऊ२
२र र ४ ३ ४ ५ १ ३ २ १ ३ २
३४त्। श्वासेपतयन्तमुच्चणम्। एह्विया। एह्विया३४।

अथ द्वादशी।

३ १ २ ३ १ २
पवित्रन्ते विततम्ब्रह्मणस्पते

३ १२ ३१ ३१२ ३ १२
प्रभुर्गात्राणि पर्य्येषि विश्वतः।

५ १ २ ३२ ४ ३ ४ ३ ४ ५ २ १ २
हाउहाइरा। ण्या२३४। पावाःपशुमप्सुगृभ्णते। एह्रि

२ १ ३ २ ५ ४
या। एह्रिया३४। हाउ। होपुइ। डा॥ २३॥ ९८

अत्रिऋषिः*। सोमम् ऋत्विजः "अञ्जते" गोभिः तथा "व्यञ्जते" विविध मञ्जति "समञ्जते" सम्यगञ्जति। स्तुत्यर्थत्वादपुनरुक्तिः † तथा "क्रतु" बलकर्त्तारं "रिहन्ति" लिहन्ति आस्वादयन्ति देवाः तथा पुनः "मध्वा" मधुना गव्येनाभ्यञ्जते। तमेव सोमं "सिन्धोः" उदकस्य रसस्याधारभूते "उच्छ्वासे" उच्छ्रिते देशे "पतयन्तं" गच्छन्तं [पतॢ गतावित्यस्मात् स्वार्थिके णिचि वृद्ध्यभावश्छान्दसः] "उक्षणं" सेक्तारम् "हिरण्यपावाः" हिरण्येन पुनन्तः "पशु" द्रष्टारं ‡ [पशुः पश्यतेरिति निरुक्तम्] "अप्सु" वसतीवरीषु "गृभ्णते" गृह्णन्ति ¶॥

"मध्वा"-"मधुना"—इति, "अप्सु"-"आप्सु"—इति च पाठः॥ ११॥ ९८

* "भौमः"—इति ऋषि-नै०।

‡ पुनरुक्तिदोषो नेति भावः।

† 'पशुं सोमम्'—इति वि०।

¶ 'विनियोग उपसद्ये प्रवर्ग्ये च'—इति वि०।

१२ ३२उ ३ १ २
अतप्ततनूर्न तदामो अश्नुते
३ २ ३१र २३ १र २र
शृतास इद्वहन्तः सन्तदाशत ॥ १२ ॥ ९९ *

॥ द्वितीय-दशति ॥

२१ १र १२१ २ १
( अर्कपुष्पम् ॥ ) पवित्रन्ते विततम्ब्रह्मणस्पते३ । ऊवे
१२ २ २ १र २र १ ०र
२३ । २ । होवा३हा३ । हाइ । प्रभुर्गात्राणिपर्येषि
१ १ १२ २ २ १
विश्वता२३ः । ऊवे२३ । २ । होवा३हा३ । हाइ । अत
२ र१ ५र १र ३ १ १ २ २ २
प्ततनूर्नतदा२मो अश्नुते३ । ऊवे२३ । २ । होवा३हा३हा
१र२१ २ १ ५र १ २
इ । शृतासइद्वहन्तःसन्तदा२शत । ऊवे२३ । २ । हो
२ २ २ ५र र २ १रर र ५र १र
वा३हा३ । हा३४ । औ होवा । अर्कोदेवाना२म्परमेवि
५र ३११११
यो२मा२३४५न् ॥ ३४ ॥

२१ २र१ ११ २
( अर्कपुष्पोत्तरम् ॥ ) पवित्रन्तेविततम्ब्रह्मणस्पते३ ।

---

* उ० २,१,१६,१ = ऋ० ९,३,८,१ = आरण्ये १,१,११—१,१,१२—ऊहे ७,२,१ —७,१,१—१५,१,१ = ऊह्ये १,१,८—४,१,२ ।

१ २र १ १ र २र १ २र १
ऊवाइ। औहोवा२। प्रभुर्गात्राणिपरियेषिविश्वता२३ः।
१ २र १ १ २ र१ ऽर १र २ १
ऊवाइ। औहोवा२। अतप्ततनूर्नतदा२मोअश्नुते३। ऊ
२र १ १र२१ २ १ ऽर
वाइ। औहोवा२। शृतासइद्वहन्तःसन्तदा२शत।
१ २र १ ३ ५र र २ १ २
ऊवाइ। औ। हो२। वा२३४। औहोवा। अर्कस्य
र १र २ १र ऽर ३ १ १ १ १
देवाःपरमेवियो२मा२३४५न् ॥ २५ ॥ ९९

॥ इति ग्रामे गेये षोड़शः प्रपाठकः ॥

पवित्रऋषिः*। हे "ब्रह्मणस्पते" मन्त्रस्य स्वामिन्! सोम! "ते" "पवित्र" शोभन मङ्ग "विततं" सर्वत्र विस्तृतम्। स "प्रभुः" प्रभविता त्वं "गात्राणि" पातुरङ्गानि "पर्येषि" परिगच्छसि। "विश्वतः" सर्वतः तव तत्पवित्रम् "अतप्ततनूः" पयोव्रतादिना असन्तप्तगात्रः† "आमः" अपरिपक्वः "नाश्नुते" न व्याप्नोति। "शृतासः‡ इत्" शृताएव परिपक्वाएव "वहन्तः" यागं निर्वहन्तः तत् पवित्रं "समासत" व्याप्नुवन्ति¶॥

* "आङ्गिरसः"—इति ऋषि-नै०।

† 'अतप्तशरीरः सूक्ष्मैरपि छिद्रैः दशापवित्रस्य'—इत्यादि वि०।

‡ 'शृतासः निष्पन्न-सोमाः'—इति वि०।

¶ 'व्याप्नुवन्ति द्रोणकलशम्'—इति वि०।

"सन्तदाशत"-"ततसमासत"—इति पाठौ* ॥ ६ ॥ ९९

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य नवमः खण्डः ॥

॥ इति जागतम् ॥

—:०:—

इन्द्रमच्छेतिखण्डेऽस्मिन् ऋचो द्वादश संस्थिताः ।
सकला उष्णिहस्तत्र वक्ष्यन्ते ऋषयः पृथक् ॥

तत्र दशमे खण्डे—

सैषा प्रथमा ।

२ ३१ २ ३२ ३१२ ३१२   ३ १ २
इन्द्रमच्छसुताइमेवृषणंयन्तुहरयः ।
३ २   ३ २ ३ १ २   २ १ २
अुष्टे†जातासइन्दवःस्वर्विदः ॥ १ ॥ १०० ‡

५   २ १ २   ३२   ५
(पदे द्वे ॥) इन्द्रमच्छा । सुताइमा । औहोऽ२३४वा ।

* तप्तमुद्राधारिणां वैष्णवसम्प्रदाय-विशेषाणां मतेऽयमेव मन्त्रः शरीरे तप्त-चक्राद्यङ्कनस्य ; तथाच "अततप्ततनूः" तप्तचक्रादिभिः न तप्ता तनूः यस्य स पुरुषः "आमः" अपरिपक्वः असंस्कृतः अतएव "तत्" प्रसिद्धं कैवल्यं "न अश्नुते" इत्यर्थः । वस्तुतोऽस्य विनियोगो ज्योतिष्टोम-तृतीयेऽहनि ।

† "मुष्टी"—ऋ० ।

‡ उ० १,१,१०,१ = ऋ० ७,५,९,१ = ऊहे १,१,१०—२,१,७—६,१,१७—६,२,८—९,१,१०—१०,१,१६—१०,२,१—१२,१,१०—१२,१,१—१२,१,१०—१४,१,११—१४,१,१७।

१ २ १ ७ २ ३र ५ १ १ २र १
वृषणंय। तूहरया। औहो२३४वा। प्रुष्टाइजाता।

२ ३ २ १ २ १ २ १
सइन्दवाः। सुववी२३इदा३४३ः। ओ२३४५इ। डा ॥१॥

५ २ १ २ १ २ २ १
इन्द्रमच्छा। सुताइमा३इ। ताइ३माइ। वृ

२ १ ७ १ २ २ २ र ५र १
षणंय। तूहरया२ः। हारा३याः। अृष्टे जाता३सा

७ १ २ १ १ २ ५र र
इन्दवा२ः। आइन्दा३वा३ः। सुवरा३४। औहोवा।

२ र १ १ १ १ १
विदोवी३दा२३४५ः॥ २ ॥

४ ५ ४ २ १ २
(अनुपदे द्वे॥) इन्द्रम्। इन्द्राम्। अच्छा३हता

१ १ २ १ ७ १
१इमे२। आइमे२। वृषणंय। तूहरया२ः। राया

२ र ५र ७ १ १ २
२ः। अृष्टेजाता३साइन्दवा२ः। दावा२३ः। सुवरा

५र र २ १ १ १ १ १
३४। औहोवा। विदो३विदा२३४५ः॥ ३ ॥

३ ४ ३ ४ ३र ४ ३र ४ ५ २ २ १ २
इन्द्रमच्छसुताइमेवृषणंयन्तुहा। हो३४३। रयआ।

अथ द्वितीया।

१ २   ३ १ २ ३ १ २   १ १ २
प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव।

३ १ २   २ ३ १ २   ३ १ २
द्युमन्तꣳ शुष्ममा भर स्वर्विदम्॥ २॥ १०१*

१ २   १ २   ३ ४ ५   २
असृग्राउवा। जाताउवा३४। सइन्दवःसुवा। हो।

१ २
विदओ२३४५इ। डा॥ ४॥

१ १ २   ४ ५   १ २   ५
(पौष्कलम्॥ इन्द्रमा३च्छसु। ताई२३४माइ।

२ १ २ १   २ ३   ५   २ १   २   ०
वृषाणंया। तूहौरार३४याः। असृग्रइजाता। सइंर

३   २   १ ३ १ १ १ १
न्दार३४५वाई५६ः। सुवर्विदार२३४५ः॥ ५॥ १००

अग्निश्चाक्षुषऋषिः। "असृग्रं" असृक्षत "जातासः" जाताः "इन्दवः" पात्रेषु चरन्तः "स्वर्विदः" सर्वज्ञाः† "हरयः" हरितवर्णाः "सुताः" अभिषुताः "इमे" सोमाः "वृषणं" कामानां सेक्तारमिन्द्रम् "अच्छ यन्तु" अभि गच्छन्तु॥ १॥ १००

---

° ऋ० ७,५,९,४ = उत्त० ११,२,१।

† 'स्वर्विदः सर्वं लोकं विदन्ति'—इति वि०।

२ १र र २
( ऐषिराणि पञ्च ॥ ) प्रधन्वासौहोइ। औ३हो२३४
५ २ १र १ र १र र २ ५
वा। मजागृविः। इन्द्रायेन्दौहोइ। औ३हो२३४वा।
१ २ १ र २ ५ २ १र
परिस्रव। द्युमन्तꣳशौहोइ। औ३हो२३४वा। अमा
२ १र २ २
भर। सुवर्विदौहोइ। औ३हो२३४५वा६५६। ऊ२३
५
४पा॥ ६॥

२ १र र २ १ २ र १ र १र
प्रधन्वासौहो। वा३हो। मजागृवी२ः। इन्द्राये
र २ १ २ १ १ र
न्दौहो। वा३होइ। परिस्रावा२। द्युमन्तꣳशौहो।
२ १ २ र १ १र २ १
वा३हो। अममाभारा२। सुवर्विदौहो। वा३हो२।
२ ५र र २ ५
वा२३४औहोवा। ऊ२३४पा॥ ७॥

२र १र २ १ र १र २ र १
औहौहोइ। प्रधन्वासो२। औहौहो। मजागृ
र १र २ र १ र १र
वी२ः। औहौहोइ। इन्द्रायाइन्दा२। औहौहोइ।
२ १ र १र २ १ र १र
परिस्रावा२। औहौहोइ। द्युमन्ताꣳशू२। औहौहो।

१ २ १    २ १२    १    २    ३
ष्ममाभारा२। औहोहोइ। सुवः। वा२इ। दा२३४।
५२ २    ५
औहोवा। ऊ२३४पा ॥ ८॥

१    १    १    १    २ १
ऊवा२इ। ऊवा२इ। हुवा२३होयि। प्रधन्वासो
२ १    २ १    १
२। मजागृवी२ः। इन्द्रायाइन्दा२। परिस्रावा२।
१    २ १    १
द्युमन्ताꣳष्मु२। ष्ममाभारा२। सुववाइदा२म्।
१    १    १    १    ३    ५२ २
हुवा२इ। हुवा२इ। हुवा२३होर। वा२३४औहोवा।
३    ५
ऊ२३४पा ॥ ९ ॥

११    ४२    ५२    १    २    ५    १
प्रधन्वा२३सोमजागृवीः। इन्द्रा२या२३४इन्दो। ओइ।
२    १    २    २    १    २    ५    १    ०
पा३रा३स्रा३वा। द्युमा२न्ता२३४ꣳष्मꣳ। ओ। ष्ममा
२ १    १११
भा२३४५रा६५६। सुवर्विदा२३४५म् ॥ १० ॥ १०१

चक्षुर्मानवऋषिः। हे "सोम!" "जागृविः" जागरण-शीलस्त्वं "प्रधन्व" प्रक्षर। हे "इन्दो" सोम! "इन्द्राय" "परि

अथ तृतीया।

१ २ ३ १ २ १ २ ३ १ २
सखायआनिषीदतपुनानायप्रगायत।
३ २ ३ १र २र ३ २
शिशुन्नयज्ञैःपरिभूषतश्रिये ॥ ३ ॥ १०२ *

२ ३र १ १र
( औक्तानि पञ्च ॥ ) सखा३या आ२। निषीदता।
र २ १र २ र १
पुनाना२३या। प्रगायता। शिशुन्ना२३या। ज्ञैःपरा
१ २ १
इभू२। षताआ२३या३४३इ। ओ२३४५ई। डा ॥ ११ ॥
४ ५ ४ ५ २ ३ ५ १ ३ ५
साखायाआ। निषीदा२३४ता। पुना२ना२३४या।
१ ३ ५र र ३ ५ २ १ २ १ २र ३
प्रा२गा२३४औहोवा। या२३४ता। शिशून्नया। ज्ञैःप
२ १ १ ३ ५र र २
रिभू२३। षा२ता२३४औहोवा। श्रिये१ ॥ १२ ॥

स्रव" परितः पात्रेषु चर। किञ्च "द्युमन्तं" दीप्ति-युक्तम् †। "स्वर्विदं" सर्वस्य लम्भकं "शुष्म" शत्रूणां शोषकं बलम् ‡ "आभर" आहर ॥ २ ॥ १०१

---

* उ० ४,२,९,१ = ऋ०७,५,७,१ = ऊहे २,२ १—४,१,२—७,१,१८—७,१,१९—९,१,१८—१४,१,२५।

† "द्युमत्"—इति दीप्ति-कर्मसु अन्तिमं नैघण्टुकम् १,१६।

‡ "शुष्मम्"—इति बलनामसु एकादशं नैघण्टुकम् २,९।

४ ५र ४र ५र ५ २ र १र र
सखायआनि। षीदाईता। पुनानायप्रगायाता।

र १र २ १ २
शिशुन्नयज्ञैःपरा२इ। भूषा२३ता३। आ२३या३४३इ।

१
ओ२३४५इ। डा॥ १३॥

५र र ४ ५र ४र ५र ५ २ र १र
ओहाइ। सखायआनि। षीदाईता। पुनानौहाइ।

२र १र ५ ४ ५ ४ २र १ र २र १ र २
पुनानौहोये३। यापायापा। गायतौहोइ। गायतौहोये३।

४ ५ ४ ५ २ १ र २ १ र २ ४ ५
शाइशूꣳशाइशूम्। नयज्ञौहोइ। नयज्ञौहोये३। पारी।

३ २ ५र र २ २र ३ २
पारा३४औहोवा। ए३। भूषतश्रिये१॥ १४॥

५ र ३ २ ३ ५ २ १ २ ३ ५
सखा। यआओ२३४वा। निषाइ। दाताओ२३४वा।

२ र १र ५र १ २ ३ ५ १ र
पुनानायप्रगा२यत। शाइशाओ२२४वा। नयज्ञैःपरि

२ १ २ ३ ५ २
भूः३। षाताओ२३४वा। श्रिये१॥ १५॥ १०२

पर्वतनारदावृषी*। हे "सखायः" सखिभूताः! "स्तोतारः"

---

* पर्वतो वेदः काश्यपिः, नारदश्च शैखण्डी अप्सरसः इति ऋषि-गेय-लभ्यः।

अथ चतुर्थी।

१ २ ३ १ २ ३ २३ १ २
तंवःसखायोमदायपुनानमभिगायत।

३ २ ३१ २ ३ १ २
शिशुन्नहव्यैःस्वदयन्तगूर्त्तिभिः ॥ ४ ॥ १०३ *

(कार्णश्रवसानि त्रीणि॥) ता२३४०वः। सा२३४
खा। योमदा२३या। पनानम। भिगाया२३ता।
शाइशुन्नह। व्यःस्वदया२३। तङ्गूर्त्तिभा३४३इ। ओ२
३४५इ। डा ॥ १६ ॥

ऋत्विजः "आ नि षीदत" स्तोतु मुपविशत। अथ "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत ततः अभिषुतं सोमं "यज्ञैः" यजनीयैः हविर्भिः मिश्रितैः "श्रिये" शोभार्थं "परिभूषत" परितोऽलङ्कुरुत। तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितरः † आभरणैरलङ्कुर्वन्ति तद्वत् ॥ ३ ॥ १०२

---

* उ० ४,१,१९,१ = ऋ० ५,८,१ = ऊहे ३,२,१२—८,१,१०— ८,१,११—९,२,२०—१८,१,१।

† 'मातरः'—इति वि०।

२ ३ ४ ५ २र १ २ २ ५ १ र
ओइतंवःसखा। योम। दायाओ२३४वा। पुना
१ ऽ २ ३ ५ ३ २ ३ ५
नमभिगा३। आ। ओ२३४वा। यताओ२३४वा।
१ २ १ २ १र २ २ ३ ५ ३ २
शिश्रुन्नह। व्यैःस्वदया३। आ। ओ२३४वा। तगा
३ ५ २ ५
ओ२३४वा। तीर३४भीः॥ १७॥

५ र र ५ १र १ ३र १
तंवःसखायोमदा६या। पुनानमभिगा२यत। शा
७ २ ४र ५ ३ २ १ ४ २
इश्रुन्नहा३। व्यैःस्व। दया३। ता२३गू३। ता३४५इ
५
भो६हाइ॥ १८॥ १०३

पर्वतनारदाद्वयो। हे "सखायः!" ऋत्विजः "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं "तं" सोमम् "अभिगायत" अभिष्टुत। तमिमं सोमं "शिशुं न" शिशुमिवालङ्कारैः क्षीरादिभिश्चालङ्कुर्वन्ति तद्वत्। "हव्यैः" हविर्भिर्मिश्रयणैः "गूर्त्तिभिः" स्तुतिभिश्च * "स्वदयन्त" स्वादूकुरुत।

"हव्यैः"-"यज्ञैः"—इति पाठौ॥ ४॥ १०३

---

* गूर्त्तिभिरिति अर्चति-कर्मणो (नै०३,१४) गूर्धयते रूपमिदम् भाष्यकारस्य। 'गूर्त्तिभिः उद्यमानै रन्नै र्धनैर्वा'—इति वि०।

अथ पञ्चमी।

३ १२ २र३१ १ ३ २ ३ २ ३ १ २
प्राणाशिशुर्म्महीनाᳫंहिन्वन्नृतस्यदीधितिम्।

३ १ २ ३१ २३१२ ३ २
विश्वापरिप्रियाभुवदधद्विता ॥ ५ ॥ १०४*

४ ५ २ ५ २ २
(वाचः सामनी द्वे ॥) प्राणा। शाइ३४इशूः। मह्वा

५ १ २ ५ २ १ २ २
२३४इनाम्। हिन्वार्नार२३४त्तां। स्यार्दाइधीरतीम्।

१ २र१ १२र २१ २ ३ २ १
वाइश्वापरि। प्रियाभुवार३त्। अधद्विता३४३। ओ२३

४५इ। डा ॥ १९ ॥

४ ५ ४ ५ १ १ ऽ २
प्राणाप्राणा। शाइशु र:शाइशूरः। मह्वा३१उवाये३।

१ १ १ १ २ १ २ २
ना२३४५म्। हिन्वन्नात्तस्यदा३१उवाये३। धी२३४

५ १ र २ ५ २
तीम्। विश्वापारिप्रिया३१उवा२३। भू२३४वात्। अधी

१ २ १ ३ ५र र
२। द्वौ२। ऊवाये३। द्वार्इता२३४औहोवा।

२ ५
ऊ३२३४पा ॥ २० ॥

---

* उ० ३,२,१८,१ = ऋ० ७,५,४,१=ऊहे २,१,१२—४,१,१— ७,१,१०—७,२,२१ —९,१,१४—९,२,१—११,१,५—१५,२,८—१६,२,८।

४२ ५र ४ २१ र
(इन्द्रसामनी द्वे ॥) प्राणाशिशूः। महाऽ२इनाम्।
र ५ १ र २ १ २
औहोऽ३वा। हिन्वन्नतस्यदीधितिम्। वाइस्वाउवा।
१ २ १ ३ २ २ २
पाराउवा। प्रिया२भुवत्। अधाउवा३। ए३। हिता१
॥ २१ ॥

५र र २ ४ ५ १ २ १
प्राणा। हो३इ। इयाहाइ। शाइशुर्महाइ। ना
२र ३ २र ३ ऽ २ १ र
२३म्। आउहाउ। हो३वा। हिन्वन्नृतस्यदीधिता-
२र ३ २र३ ऽ २ १ र २र२र ३ ३
इम्। आउहाउ। हो३वा। विश्वापा। यीउहाउ।
ऽ २ १ १ ३ ५र र १ २ ३
हो३वा। प्रिया२३। भूरवार३४औहोवा। अधंहि
२
ता१ ॥ २२ ॥

५र र ३ २ ३ ५
(मरुतां प्रेङ्खम्॥) प्राणा। हहोइ। शा२३४इशूः।
३ २ २ १र १ २ १ २ ५
हहो३इ। महीना२३म्। होवा३होये३४। हिन्वन्।
३ २ ३ ५ ३ २ २ १र
हहोइ। आ२३४र्त्ता। हहो३। स्यदीधिता२३इम्।

१ २ १ २ ५ र ३ २ ३ ५ १ २
होवा३होये३४। विश्वा। हहोइ। पा२३४री। हहो

२ १ २ १ ४
३इ। प्रियाभूवा२३त्। होवा३होये३। आ२३धा३।

२ ५
हा३४५इतोई्हाइ॥ २३ ॥ १०४

त्रितऋषिः*। "प्राणा" यज्ञं कुर्वाणा इत्यर्थः †। "महीनां" महतीनां मंहनीयानां वा अपां ‡ "शिशुः" स्थानीयः सोमः ¶ "ऋतस्य" यज्ञस्य "दीधितिं" दीप्तिमन्तं प्रकाशकं वा स्वीयं रसम् "हिन्वन्" प्रेरयन् §। "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परि भुवत्" परिभवति व्याप्नोति। अपि च "द्विता" द्विधा भवति॥। दिवि पृथिव्यां च वर्त्तत इत्यर्थः। +

"प्राणा"-"क्राणा"—इति पाठः॥ ५॥ १०४

---

* "आप्त्यः"—इति ऋषि-नि०।

† भाष्यकारस्तु क्राणाइति ऋग्वेदीयपाठमनुसृत्यैवं व्याख्यातवान्; तथाच यास्कः—"गोभिः क्राणा अनूषत—गोभिः कुर्वाणा अस्तोषत"—इति ४,१९। सामवेदीयपाठस्तु प्राणाइति अतएव 'प्राणभूताः'—इति विवरण-व्याख्यानम्।

‡ 'गवाम्'—इति वि०।

¶ 'शिशुः शंसनीयः—इति वि०।

§ 'व्याप्नुवन्'—इति वि०।

॥ 'द्वैतवर्णा सोमदेवता एव'—इति वि०।

+ 'विनियोगोऽस्य षष्ठेऽहनि'—इति वि०।

अथ षष्ठी ।

१२ ३१२ ३२३ १२ ३१२
पवस्वदेववीतयइन्दोधाराभिरोजसा ।
२३ १ २
आकलशम्मधुमांत्सोमनःसदः ॥ ६ ॥ १०५ *

१ ३ २ ३ ५
( प्राजापत्ये द्वे ॥ ) पवस्वदा२इ । ववीता२३४याइ ।
१ र र ३ २ ३ ५ १र
आइन्दोधारा२ । भिरोजा२३४सा । आकालशाम् ।
२ ३ ५ १ १र१ ४ ४
माधूमा२३४०त्सो । मनएमाना२३ः । सदा५ए । द्वा५
इ । डा ॥ २४ ॥

५ २ १र र १ र
पवस्वदा । ववीतयाइ । इन्दोधार२रा३४ । भिरो
५ ५ १ २ २ १ १ १ १
जसा६ए । आका२हा । लाशा२म् । माध२वाइ ।
१ २ १ ५ ४ ५
मांत्सा२३ । मना२३४वा । सा५दो५वाइ ॥ २५ ॥ १०५

मनुर्ऋषिः † । हे "इन्दो" सोम ! "देववीतये" देवानां भक्ष-

---

* उ० ५,१,१७,१=ऋ० ७,५,१०,५=क्वचे५,१,१७—११,२,१९—६,३,४—२४,१,१३ ।

† "आप्सवः"—इति ऋषि-नै० ।

अथ सप्तमी।

१ २ ३ २३ २र ३ २३ १ २
सोमः पुनान ऊर्म्मिणाव्यं वारं विधावति।

१ २ ३ १र २र४ ३ १ २
अग्रे वाचः पवमानः कनिक्रदत्॥ ७॥ १०६ *

५र २ र १ २
(सुज्ञाने द्वे॥) सोमःपुना। नऊर्मिणा। अव्यं

१ र १ २ र १ १
वारा२म्। विधावताइ। अग्रेवाचा२ः। पव। मा२

३ ५र र १ २ र १ २ १ १ १ १
२ना२३४औहोवा। कनिक्रददे३पा२३४५॥ २६॥

५र २ र १ २ १ २ ५र
सोमःपुना। नऊर्मिणोवा३। ओ२। वा२३४। औ

र १ र २र ३ २ १ २ १
होवा। अव्यंवारंविधावति। अग्रे३। होवा३। हो

णाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम" "मधुमान्" मदकररसवांस्त्वं "नः" अस्मदीयं "कलशं" द्रोणाख्यम् "आसद" आसीद। [सदेलिङ्गरूपम् †॥ ६॥ १०५

---

* उ० ३,१,१८,१=ऋ० ७,५,१०,५=जहे २,२,१०—७,२,६—६,३,४—१५,२,११।

† 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

३　　५र र　　२र१　१र　　३ १
२। वा२३४। औहोवा। वाचःपवमानः। कना३।

१ २　१　३　५र र　३　५
होवा३। हो२। वा२३४। औहोवा। क्रा२३४दात् ॥२७॥

४र५　र ४　१　र
(द्यौते द्वे ॥) सोमःपुनानऊ। मिणा। अव्यवार-

२ १र　१　१ र र　११ र　२　४ ५
विधावा२३ती। अग्रे वाचाः। पवमानाः। का३निक्र।

३ १ १ १ १
दा२३४५त् ॥ २८ ॥

२र　र र　३　५र　२ र र ३
सोमःपुनानऊर्मिणा२३४ऐही। अव्यंवारंविधावता

५र　२ र र　र ३　५र　४ ५ २
२३४ऐही। अग्रेवाचःपवमाना२३४ऐही। कानी। क्र

५　५　४
ददे३४। हियाईहा। हो५इ। डा ॥ २९ ॥

३र४ ५ र　१ २　३　५
(आतीषादीये द्वे ॥) सोमःपुना। नऊ३र्मी२३४णा।

१　२र　१ २　१ ऽ　३　५
अव्यंवारम्। विधावति। अग्रा३२इ। वा२३४चाः।

१ ऽ　२　५　३ २　४
पवा३२। मा२३४नाः। कना३इक्रा५दा६५ईत् ॥ ३० ॥

अथाष्टमी।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
प्रपुनानायवेधसेसोमायवचउच्यते।
३ १२ १२ ३ १ २ ३ १ २
भृतिन्नभरामतिभिर्जुजोषते ॥ ८ ॥ १०७ *

३२ ४ ५ २ २ ३ ४२ ५ ५ १ २ २
सोमःपुना। हो। नऊर्मिणा६ए। अव्यंवारविधा
२ २ ३ ३ १ १ १ १ ३ १ २
१वा३ती। अग्रेवा२३४५। चा२३४५ः। पवमा२३ना३ः।
१ ३ ५२ १ २ ३ १ १ १ १
का२ना२३४औहोवा। क्रदद२३४५ ॥ २१ ॥ १०६

अग्निर्ऋषिः †। "पुनानः" पूयमानः "सोमः" "उर्मिणा" स्वीयया धारया "अव्यम्" अविभवं "वारं" वालं पवित्रं "विधावति" विविधं गच्छति। कीदृशः? "पवमानः" पूतः "वाचः" स्तोत्रस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ‡ ॥

"अव्यम्"—"अव्यः"—इति साम्न ऋचः पाठः ॥ ७ ॥ १०६

* ऋ० ७, ५, ६, १।

† "चाक्षुषः"—इति ऋषि-नि०।

‡ दाधर्त्ति दर्धर्तीत्यादिना (पा० ७, ४, ६४) सिद्धम्।

¶ 'विनियोगोऽस्य चतुर्थेऽह्नि'—इति वि०।

२ १　　४र ५र
(सामसामानि चत्वारि॥) प्रपुनार३नायवेधसाइ।

१　　२ र　　७　　१
होइ। होइ। सोमायवचाउच्यातार३इ। भृतिन्नभरा

७　　१र　　२　　१
मतिभार३इः। जुजोषार३ता३४३इ॥ ओ२३४५इ। डा

॥ ३२॥

४ र र　　र ४　　२र १ १ २
प्रपुनानौहो५यवेधसाइ। सोमाऔ३हो३४। यव

५　४　२ १ २ २　　५ र　४　　२
चउच्यताइ। भृताऔ३हो३४। नभरामतिभाइः। जु

५
जा३१उवा२३। षार३४ते॥ ३३॥ १०७

द्वितो नाम ऋषिः* स्वात्मानं प्रत्याह। "पुनानाय" पवित्रेण पूयमानाय† "वेधसे" कर्म्मणो विधात्रे सोमाय‡ "वचः" स्तोत्र-लक्षणं "प्रोच्यते" त्वया प्रोच्यताम्। किञ्च। "मतिभिः" स्तुतिभिः "जुजोषते" प्रीयमाणाय स्तुतिं "प्रभर" प्रकर्षेण धारय। तत्र दृष्टान्तः। "भृतिन्न" यथा भृतकाय भृतिं सम्पादयति तद्वत्।

"वच उच्यते"-"वच उद्यते"—इति साम्न ऋचः पाठः।

॥ ८॥ १०७

---

* "आप्त्यः"—इति ऋषि मे०।

† 'सोमपानाय'—इति वि०।

‡ 'मेधाविने सोमाय'—इति वि०। "वेधाः"—इति मेधाविनामसु षष्ठं नैघण्टुकम् ३,१५।

अथ नवमी।

१ २ ३१२ ३१२
गोमन्नइन्दोअश्ववत्सुतःसुदक्षधनिव।
१ २ ३ २ ३ २ ३ १ २
शुचिञ्च*वर्णमधिगोषुधारय॥ ९॥ १०८ †

५ ५ २ ३ ४र ५ ५ १
गो४मन्नः। चोइ। इन्दोअश्ववाईदे। क्षुतःसुदक्ष
२ २ २ १ ३ २ ३ ४र र
धा१नीश्वा। शुचिञ्चवा२३४५। णमधिगो२३४औहो
३ ५ २१ २ ४५ ४
वा। षू२३४धा। रया। औ३होवा। चो५इ। डा॥
॥ ३४ ॥ १०८

पर्वतनारदावृषी। हे "सुदक्ष" सुबल! हे "इन्दो" सोम। "सुतः" अभिषुतस्त्वं "नःअस्माकम्"‡ "गोमत्" यज्ञ-साधन-गो-युक्तं धनं "धनिव" धन्व [ वर्णविकारः ¶ ] गमय [ धन्वतिर्गत्यर्थः § ] ततो हं "शुचिं" पूतन्दीप्यमानं "वर्णं" रसञ्च "गोषु" क्षीरादिषु "अधिधारय" अधिकं प्रापयामि॥

---

* "ते"—इति ऋ०।

† उ० ७,३,२०,१=ऋ० ७,५,८,४=ऊहे १२,१,१४—१७,१,२—१८,२,६।

‡ 'नः अस्मभ्यम्'—इति वि०।

¶ "व्यत्ययोबहुलम् (३,४,९८)"—इति पाणिनी-सूत्रस्य-सुप्तिङित्यादिवचनेनेत्यर्थः।

§ नि० नै० २,१४,६४।

अथ दशमी ।

३ १ २ ३ १२ ३ १र २र
अस्मभ्यन्त्वावसुविदमभिवाणीरनूषत ।
१ २ ३ १ २ ३ १ २
गोभिष्टे वर्णमभिवासयामसि ॥ १० ॥ १०९ *

४ ५ २ ५ २ ३ ५
हावास्मा । भ्या२३४न्त्वा । वाह्वौ२३४दाम् ।
१ २ ५ २ १ ३ ५ २ ५
आभा२इवा२३४णीः । अना ओ२३४वा । षा२३४ता ।
१र २ र१ २ ३ २ १ २ र ३
गोभिष्टे व । र्णमभिवा२३ । सयामसिहो२३४५इ । डा ॥

॥ ३५ ॥ १०९

"धनिव"-"धन्व"—इति, "धास्य" "दीधरम्"—इति च छन्दोग-बह्वृचानां पाठभेदः ॥ ९ ॥ १०८

पर्वतनारदावृषी । सोम ! "वसुविदं" धनस्य दातारं "त्वा" त्वाम् "अस्मभ्य" धनादिदानार्थं "वाणीः" अस्मदीयावाचः "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने ( अदा०प० ] । वयं "ते" तव "वर्णम्" आवरकं रसं "गाभिः" गो-विकारैः क्षीरादिभिः "अभिवासयामसि" अभिवासयामः अभित आच्छादयामः ॥ १० ॥

* ऋ० ७,५,१,६ ।

अथैकादशी ।

१२ ३१२उ ३२ ३१२ ३१ २
पवतेहर्यतोहरिरतिह्वरा॑ऽसिरऽह्या ।
३क२र ३ १२ ३२३१२
अभ्यर्षस्तोटभ्योवीरवद्यशः ॥ ११ ॥ ११०

५ र २१र २
( यशा॑ऽसि त्रीणि ॥ ) पवतेहा । र्यतोहरिः । औ
२ ३ ५ १ २१ ऽर १ २र
३होइ३१इ । औ२होर३४वा । आतिह्वरा२ऽसिरऽह्रिया ।
३र २ ३ ५ २ १० र १२र १
औहौ३१इ । औ२होर३४वा । अभ्यर्षस्तोटभ्योवा ।
२ २ ३ ५ १ ३ ५र र
औ३हो३१इ । औ२होर३४वा । रा२वार३४औहोवा ।
१र १३११११
यशोयशा२३४५ः ॥ २६ ॥

३२ ४ ५र २१र २र१ ५
पवा३ । पवतेहा । र्यतोहरिः । औहोइ । औ३
२ ३र २ १ २१ऽर १ २ र र १
होइ । औहोइ । आतिह्वरा२ऽसिरऽह्रिया । औहो
५ २ ३र २ १२ र १२र १ २र
इ । औ३होइ । औहोइ । अभ्यर्षस्तोटभ्योवा । औ

---

* उ० १,२,११,२=ऋ० ७,५,११,३=ऋचे १.२,१६—६,२,१५—६,२,१६—९,२,२=
ऋच्छ्रे ९,१,१६ ।

१　　५　२　　३र २　　१　२　　५र र
होइ । औ३होइ । औहो३ । रा२वा२३४औहोवा ।
२ र　१ २ १ १ १ १
यशोयशा२३४५ः ॥ ३७ ॥

३ ४ ५र　　३ २　　१　　५र　४
पवतेहर्यतः । हरी३ः । आ२३४ । तिह्वरा२ᳲसिर ।
५　　२ १　　र ५　३र २　　१　२
हिया । अभ्यर्षा२३४ । स्तोट । भ्योवा३इ । रा२वा
५र र　　२　　५
२३४औहोवा । या२३४शाः ॥ ३८ ॥ ११०

अग्निश्चाक्षुष ऋषिः । "हर्यतः" स्पृहणीयः* "हरिः" हरितवर्णः सोमः "रंह्यां" [तृतीयाया आकारः†] साधु वेगेन "ह्वरांसि" कुटिलानि अनृजूनि पवित्राणि "अति पवते" अतीत्य गच्छति । अथ प्रत्यक्षस्तुतिः—हे सोम ! त्वं "स्तोतृभ्यः" "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्ष" अभिगमय प्रयच्छेत्यर्थः‡ ।

"अभ्यर्ष"-"अभ्यर्षन्"—इति साम्न ऋचः पाठौ ॥ ११ ॥ ११०

---

* 'हरिभिर्यन्ता'—इति वि० ।

† "सुपांसुलुक् (७,१,३९)"—इत्यादिनेति भावः ।

‡ 'विनियोगोऽस्य प्रथमेऽहनि'—इति वि० ।

अथ द्वादशी।

३ १ २ ३ २ ३ १ २ ३ १ १
परिकोशम्मधुश्चुतꣳसोमः पुनानोअर्षति।
३ १२ ३ १ २ ३ १ २
अभिवाणीऋषीणाꣳसप्ता* नूषत॥ १२॥ १११ †

॥ तृतीय-दशति॥

२ १ २ ४ ५ १२
(भारद्वाजम्॥) परिकोशम्मधुश्चुताम्। सोमः
२ २ १२ २ १ २ २ ३ २२ १ २२
पुनानोअर्षति। द्वोयेइ। अभिवा२३४५। णीऋषी
२ १ २ ३ ५ ३ ५
णाꣳस। प्तानाओ२३४वा। षा२३४ता॥ ३९॥१११

॥ इति अर्द्धःप्रपाठकः॥

द्वितऋषिः‡। सः "पुनानः" पूयमानः सोमः "मधुश्चुतं" मधुर-रसस्य च्यावयितारं द्रोणकलशं प्रति आत्मीयं रसं "पर्यर्षति" परि गमयति। तमिमं सोमम् "ऋषीणां" "सप्त वाणीः" सप्तच्छन्दांसि¶ "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने कुटादिः (प०)।

* "सप्त"—इति ऋ०।

† ऋ० ७,५,६,२।

‡ "आप्त्यः"—इति ऋषि-नि०।

¶ गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती चेति सप्तच्छन्दांसि।

"सोमः पुनानो अर्षति"-"अव्यये वारे अर्षति"—इति साम्न ऋचः पाठो॥ १२ ॥ १११

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य दशमः खण्डः॥

॥ इत्यौष्णिहम् ॥

—:०:—

स्युः पवस्वेति खण्डेऽस्मिन्नृचोऽष्टौ ककुभोऽत्र तु।
"ससुन्वे"-इति गायत्री यवमध्येति* केचन।
अक्षरव्यूहनादेषा ककुबेवेति केचन।
"एष धारयासृतः" प्रगाथः काकुभोऽन्तिमः।
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे॥

तत्र एकादशे खण्डे—

सैषा प्रथमा।

१ २ ३ १ २   ३१ २   ३ १ २ ३ १ २
पवस्वमधुमत्तमइन्द्रायसोमक्रतुवित्तमोमदः।
१ २ ३ १ १ ३ १ २
महिद्युक्षतमोमदः॥ १ ॥ ११२

* "विपरीता यवमध्या (पि० ३, ५८)" यदाद्यन्त्यौ पादौ लघ्वक्षरौ भवतः मध्यमश्च बह्वक्षरः तदा यवमध्येति कथ्यते।

१ उ० १,१,१६,७=ऋ० ७,५,१७,१=ऊहे १,१,६—७,१,८—९,२,७—१०,१,५—१०,२,५—१३,१,४—१३,२,१८—१४,१,८।

४ ५ १ २
ओम्॥ (वासिष्ठम्॥) पावा। स्वमाधुमा। तामो
३ ५ ३ ५ २र १ २र१ २
ओ२३४वा। ई२३४न्द्रा। यसोमक्रतुवित्तमोमदा३ः।
१ २ ३ ५ २ १ २र १ २ १२११
ओइ। माहाओ२३४वा। द्युत्तमोमदा२३४५ः॥ १॥

२ ५ ४ ५ ५ १
(सफम्॥) पा३४। वस्वम। धुमत्ता६माः। आ
१ १ २ ४ २ २
इन्द्रा२। यसोमा२। क्रतुवाइत्ता३मो३। मा३दाः।
१ २ ४ २ ५
महिद्युत्ताता३मो३। मा३४५दो६हाइ॥ २॥

४५ ४५र ४ १ र र २
पवस्वमधुमा। इहा। तमः। इन्द्रायसोमक्रतुवित्त
१र २ १ २ १ २ १ २ १र
मोमार२३दाः। इहा। महाइद्यु२३त्ता। इहा। तमो
२ १
मार२३दा३४३ः। ओ२३४५इ। डा॥ ३॥

४५ ४र ४ १
(वासिष्ठम्॥) पवस्वमा। ए५। धुमा। तमाः।
२र १ २ २ १ २
इन्द्रायसो३। हा। औ३हो। माक्रातवो२३दा३।

अथोपसर्गभाग माह—"अंशुर्नशोचिः। चिकित्वोअभिनोनय।"-इति "अंशुर्न" व्याप्त आदित्य इव शोचिर्दीप्ती भवतीन्द्रः [ शुच दीप्तौ (भ्वा० आ०)] शुद्ध: [शुचेर्मत्वर्थीयलोपः ] शोचिष्मान्। अथ प्रत्यक्षस्तुतिः—हे "चिकित्वः" चिकित्वन् [ मतुवसोरुसम्बुद्धौ छन्दसि (पा०८,३,१)"--इति रुत्वम् ] ज्ञानवन्निन्द्र ! "नः" अस्मान् अभि लक्ष्य "नय" धनादि प्रापय ॥

अथ भागद्वयं मिलित्वाह—"इन्द्रोविदेतमुस्तुहि। ईशेहि शक्रः"—इति। "इन्द्रः" परमैश्वर्ययुक्तः। "विदे" विद्यते सर्वैर्ज्ञायते "तमु" तमेवेन्द्रं "स्तुहि" स्तुतिं कुर्विति। ऋषिरात्मानमेव शास्ति। "हि" यस्मात् "शक्रः" शत्रु-हनन-समर्थ इन्द्रः "ईशे" ईष्टे सर्वस्येति तस्मात् तमेव स्तुहीति समन्वयः॥

अथ शाक्करभाग माह—"तमूतयेहवामहेजेतारमपराजितम्। सनःस्वर्षदतिद्विषः"—इति। "तम् इन्द्रम्" "ऊतये" अस्मद्रक्षणार्थं "हवामहे" आह्वयामहे। कीदृशम्? "जेतारं" युद्धेषु शत्रुजयशीलं [ ताच्छील्ये तृन् प्रत्ययः (पा०३,२,१३५)]। अतएव अपराजितं न क्वाप्यन्यैः पराजितम्। "सः" इन्द्रः "नः" अस्माकं "द्विषः" द्वेष्टॄन् "अति स्वर्षत्" अत्यर्थं मुपतपतु विनाशयतु। स्वृ शब्दोपतापयोरित्यस्मात् पञ्चम-लकारेरूम्। अथ वा

---

* "इन्द्रतेवधार्थ-कर्मणः"—इति निरु० दै० ४, ८।

( तृतीया खण्डः )

२ ३ १ २　३ १ २　३ १ २ ३ १ २
इन्द्रन्धनस्यसातयेहवामहेजेतारमपराजितम् ।
१ २　३ २ ३ २ ३ १ २　३ २ ३ १ २
सनःस्वर्षदतिद्विषःसनःस्वर्षदतिद्विषः ॥ ७ ॥
१ २ ३ १ २　३　१र　२र
पूर्वस्ययत्तेअद्रिवोऽंशुर्म्मदाय ।
३ १र　२र　३ १ २
सुम्नआधेहिनोवसोपूर्त्तिःशविष्ठशस्यते ॥
३ १उ　३ २ ३ १र　२र　३ १ २
वशीहिशक्रोनूनन्तन्नव्यंसन्यसे ॥ ८ ॥

स्वरतिर्गतिकर्मा (निघ० २,१४,५४ ) अस्मत्तः शत्रूनतिगमयतु अतिपारयतु । तथा च बह्वृचाः—"सनःपर्षदित्यामनन्ति ॥

अथोपसर्गभाग माह—"क्रतुश्छन्दंऋतम्बृहत्"—इति । शत्रुहननानन्तरं "क्रतुः" अस्माभिरनुष्ठीयमानं कर्म * । "छन्दः" † गायत्र्यादिकं शस्त्रलक्षणम् । "ऋतम्" उदकं ‡ सोमरस इत्यर्थः । यद्वा ऋतं सत्यभूतं ¶ कर्मफलं तत्सर्वं "बृहत्" प्रभूत मस्त्विति शेषः ॥ ( ४-५-६ ) ॥

---

* "क्रतुः"—इति कर्मनामसु एकादशं नैघण्टुकम् २, १ ।

† "छन्दांसि छन्दनात्"—इति निरु० दै० १, १२ ।

‡ "ऋतम्"—इति उदकनामसु चतुष्षष्ठितमं नैघण्टुकम् १, १२ ।

¶ "ऋतम्"—इति सत्यनामसु षष्ठं नैघण्टुकम् ३, १० ।

३ १र २र ३ २ १
प्रभोजनस्यवृत्रहत्समर्य्येषुब्रवावहै ।
२ ३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २
शूरोयोगोषुगच्छतिसखासुशेवो अद्वयुः ॥ ९ ॥ ३

१ १ २ र १ १ र र र र
ए२। इन्द्रन्त्वनस्यसातयाइ। हवामहेजेतारमप
१ २ २ ५ १ १ २
रा२। जितमा३१उवा२३। ई३४डा। ए२। सनःस्वर्ष
१ १ १ २
दतिद्विषाः। सानःस्वर्षदता२इ। द्विषआ३१उवा२३।
२ ५ १र १ २ २
ई३४डा। पर्वस्ययत्तआ२। द्रिवआ३१उवा२३। ई३४
५ २ १ र ऽ २ २ ५
डा। अं भूर्मदाया२। हा३१उवा२३। ई३४डा।
१ १ २ र र १ २ २ १ १
सूम्नआधेहिनोवसाउ। पूर्त्तीः। शविष्ठशा२स्यताइ।
१ १ २ २ १ १ १ १ २
इडा। पूर्त्तीः। शविष्ठशा२स्यताइ। अथा। पूर्त्तीः।
२ १ १ १ १ ० र र २
शविष्ठशा२स्यताइ। इडा। वशीहिशक्रोनूनन्तन्नव्यं सा
२ २ २ १र २ ४ ५ १ र
१न्या३साइ। प्रभोजनस्यवा३। त्राहान्। समर्येषुब्रवा
१ १ २ १ १ १ १ १ १ २
२३होइ। वाहा३१उवा२३। इट्इडा२३४५। शूरो।

२र १र　　१　　१　　१　२　२ १र　　१
योगोषुगा२स्क्तताइ । इडा । साखा । सुभ्रीवो२द्वयूः ।
१　१ १ १ १
इडा२३४५ ॥—

अथ तृतीयस्या ऋचि प्रथमं द्विपदा माह—"इन्द्रन्धनस्यसातये हवामहे जेतारमपराजिम्"—इति । "धनस्य" "सातये" लाभार्थम् । शेषं स्पष्टम् ॥

अथ शाक्करभाग माह—"सनःस्वर्षदतिद्विषः । पूर्वस्ययत्ते अद्रिवः"—इति । "सः" इन्द्रो "नः" अस्माकं "द्विषः" द्वेष्टॄन् "अति स्वर्षत्" विनाशयतु । येऽप्यन्ये स्वयं द्वेषं न कुर्वन्ति तथापि "द्विषः" अस्माभिर्द्वेष्याः तानप्यति स्वर्षत् [ सर्वत्र हि वेदेषु योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्यादौ द्वेष्टॄणां द्वेष्याणाञ्च विनाशः प्रार्थ्यते ]। हे "अद्रिवः" अद्रयः पर्वताः तद्वन्निन्द्र ! इन्द्रो यतः पर्वतान् भिनत्ति अतः पर्वतेन्द्रयोर्भेद्यभेदकसम्बन्धः *। यद्वा आदृणात्यसुररक्षांसीति वा अन्यैः स्वयं न दीर्यते प्रहृत इति वा अद्रिर्वज्रः तद्वन्निन्द्र ! "पूर्वस्य" पुरातनस्य "ते" तव "यद्" धन मस्ति तदस्मभ्य माहरेति शेषः ॥

अथापरभागमाह—"अंशुर्मदायसून्नआधेहिनोवसः"—इति । हे इन्द्र ! योऽयम् "अंशुः" सोमलताखण्डः तज्जन्यः सोमरस इत्यर्थः [ जन्ये जनकव्यवहारः ] स च "मदाय" भवति ।

* "तलोपमार्थेन युद्धवर्णा भवन्ति"—इति निरु० नै० २, १६ ।

यस्मादस्माभिर्दत्तः सोमः तव मदाय भवति तस्मात् हे "वसो" निवासहेतो इन्द्र! "नः" अस्मान् "सुम्ने" सुखे धने वा* "आधेहि" स्थापय ॥

अथ स्तोयपरभागौ सहैवाह—"पूर्तिःशविष्ठशस्यतेवशीहिशक्रः"—इति। हे "शविष्ठ" बलवत्तमेन्द्र! तव "पूर्तिः" त्वदीयं धनपूरणं दान मित्यर्थः। "शस्यते" सर्वैः स्तूयते। "हि" यस्मात् "शक्रः" समर्थ इन्द्रः "वशी" सर्वस्य नियन्ता खलु। यद्वा, "वशी" वसुविषय-स्वीकारवान्। अतएव "शक्रः" दाने शक्तिमान्। तस्मात्ते दानं स्तूयते ॥

अथ शाक्करभाग माह—"नूनन्तनव्य सन्यसे। प्रभोजनस्य वृत्रहन्तत्समर्येषुब्रवावहै"—इति। हे "प्रभो" सर्वस्य जनस्य स्वामिन्! हे "वृत्रहन्" वृत्रो मारकः शत्रुः तद्धननवान् शत्रुघातिन्†। "नव्यम्" नूतनं‡ वली-पलितादि-लक्षणेन पुराणत्वेन वर्जितं तमिन्द्रं त्वां "नूनम्" अवश्यं "सन्यसे" अहं सम्यक् नितरां प्रक्षिपामि। अस्मिन् कर्मणि हविषो भोक्तृत्वेन स्थापयामीत्यर्थः [असु क्षेपणे (दि०प०)। व्यत्ययेनात्मने पदम् (पा०३,१,-८५) विकरण-लुक् च। सह सुपेत्यत्र सहेति योगविभागात् सन्नि-

---

* "सुम्नम्"—इति सुखनामसु षोडशं नैघण्टुकम् ३, ६।

† "वृत्रो मेघ इति नैरुक्ताः त्वाष्ट्रोऽसुर इत्यैतिहासिकाः"—इति निरु०नै० २,१६।

‡ "नव्यम्"—इति नूतननामसु चतुर्थं नैघण्टुकम् ३, २८।

भ्या मुपसर्गाभ्यां सह समासः। यद्वा, हे इन्द्र! नव्यमिति क्रिया-विशेषणम् नूतनम् अन्यै रच्युत-पूर्वं यथा भवति तथा "नूनम्"-इदानीं "सन्यसे" अस्माभिः सेव्यसे। षण सम्भक्तौ (भ्वा०प०)। ।कि रूपम्। "छन्दस्यनेक मपि साकाङ्क्षम् (पा० ८, १, ३५)—इत्याख्यातस्योदात्तत्वम्। किञ्च। "अर्थेषु" अर्थेषु प्राप्तव्येषु यज्ञादिषु कर्मसु "सम्प्रवावहै" त्वञ्चाहञ्चावां सम्भाषां करवावहै। सर्वस्य यजमानस्येन्द्रसाक्षात्कारो भवति तमर्थं द्योतयितु मेकत्र सहवदन मित्यर्थः॥

अथोपसर्गभाग माह—"शूरोयोगोषुगच्छतिसखासुशेवोअ-द्वयुः"—इति। य इन्द्रः "शूरः" समर्थः [गोषु निमित्त-सप्तमी (पा० २,३,३७)] "गोषु" गवार्थं युद्धादिषु शत्रुभ्यो गवान-यनार्थं गच्छतीत्यर्थः। कीदृशः? "सखा" समानख्यानः सखि-वदत्यन्तस्निग्धः। अतएव "सुशेवः" शोभन-सुखः अक्लेशेण सुखकरः। "अद्वयुः" द्वयरहितः सत्यानृतवर्जितः केवल-सत्य-स्वरूप इत्यर्थः। यद्वा। यद्द्वन्द्वं मनसि वचसि क्रियायां वान्यत् कार्यं मिति तद्रहितः। अथवा एतत्सदृशो द्वितीयो नास्तीत्य-द्वयुः [मत्वर्थीय उप्रत्ययः] अपिच। एताभ्यां यजमानेन्द्रयोः सम्भाषा-प्रकारोऽभिधीयते। हे इन्द्र! "यः" यजमानोऽस्ति सोऽयं गोषु दक्षिणारूपेण दातव्यासु उदारः सन् प्रवर्तते, सर्वा अपि ददातीति। यद्वा, गोषु आश्रयण-क्षीरानयनार्थं गच्छ-

( पञ्च पूरीषपदानि )

३ २ ऽऽऽऽऽ ऽ२३१ २ ३१२
एवाह्योऽ३ऽ३ऽ३वएवाऽ३ह्यग्नेएवाहीन्द्र।
३ १र २र ३ १र २र
एवाहिपूषन्एवाहिदेवाः ॥ १० ॥ ४

१ २ २ र १ १ १ १ १ १ १ २र
आइवा। हियेवार३४५। होइ। हो। वाहा३१
२ ५ १ २ २ १ १ १ १ १ १
उवार३। ई३४डा। आइवा। हियग्नार३४५इ। हो
१ २र २ ५ १ २ २
इ। हो। वाहा३१उवा२३। ई३४डा। आइवा। हि
१ १ १ १ १ १ १ २ २ ५
इन्द्रा२३४५। होइ। हो। वाहा३१उवा२३ इ३४डा।
१ २ २ १ ऽऽऽऽ १ १ २र
आइवा। हिपूषा२३४५न्। होइ। हो। वाहा३१
२ ५ १ २ २ र १ १ १ १ १
उवार३। ई ३ ४ डा। आइवा। हिदेवा २ ३ ४ ५ः।
१ १ २र २ ५
होइ। हो। वाहा ३ १ उवा २ ३। ई ३ ४ डा ॥ १ ॥

तीत्येवं मदीयं गुणं त्वं देवेषु ब्रूहि। अहमिन्द्रोऽयं स्तोत्रेषु सखा सन् सुखकरो भवतीत्येवं त्वदीयं गुणमन्येषु स्तोतृषु ब्रवीमीति। एव ऋचो व्याख्याताः॥ ( ७८-८ )॥

अथ पुरीषपदानि व्याख्यायन्ते—तानि सर्वाख्यैन्द्राख्येव तद्गुण-योगात्तत्रत्यतृतीयपदेन वाग्न्यादिपदैरिन्द्र एव * सम्बोध्य स्तूयते ॥

तत्र प्रथमं पद माह—एवाह्येवेति । हे "इन्द्र !" त्वम् "एव † हि" एव मुक्तगुणोऽसि खलु । यद्वा, एव शब्द इण्-गतौ (अदा०प०)—इत्यस्मात् "इणशीभ्यावतीति वत्प्रत्ययान्तः । सुपो लुक् (पा०७,१,३९) । अस्मदीयं यज्ञं प्रत्येव आगन्ता भवेति शेषः । एवेति पुनरुक्तिरादरार्था ॥

अथ द्वितीयं पद माह—एवाह्यग्नइति । हे "अग्ने" अग्रस्य नेतः देवानां पुरतो गन्तरिन्द्र ! एतदात्मक वा इन्द्र ! ‡ "एव हि" एवं गुणयुक्तः खलु यज्ञं प्रत्यागन्ता आ भव ॥

अथ तृतीयं पद माह—एवाहीन्द्रेति । हे "इन्द्र" परमैश्वर्ययुक्त ! यद्वा, इन्धे प्रकाशयति तेजसा भूतानीतीन्द्रः । अथवा इदं सर्वं जगत् प्रथम मपश्यदितीन्द्रः । तथाच ऐतरेयोपनिषदि श्रूयते—"इद मदर्श मिति । तस्मादिन्द्रो

* "एकएषा मित्यग्निः पृथिवीं दहति सर्वमेकोभि विपश्यति कर्मभिरादित्योगति-रेकस्य दृश्यते—इति निरु० दै० ५, २७ ।

† मन्त्रे तु "एवा"—इति "निपातस्य च ( ६, ३, १३६ )"—इति दीर्घः ।

‡ "इम मेवाग्निं महान्त मात्मान मेक मात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुण मग्निं दिव्यञ्च गरुत्मन्तम्"—इति निरु० दै० १, १८ ।

नामेन्द्रो ह वै नाम तमिन्द्रत्वं सन्त मिन्द्र इत्याचक्षते परोक्षेणेति । तादृश्यम् "एव हि" ॥

अथ चतुर्थं पद माह—एवाहिपूषन्निति । "पूषन्" विश्वस्य पोषक एतदात्मक वा इन्द्र ! * एव मुक्तगुणः खलु त्वम् ॥

अथ पञ्चमं पद माह—एवाहिदेवाइति । हे "देवाः" इन्द्रादयः ! यद्वा सर्वदेवानां बलरूपेण इन्द्रस्यावस्थानात् † इन्द्र एव बहुत्वेन सम्बोध्यते । हे "इन्द्र" ! एव मुक्तगुणः खलु त्वम् । यद्वा, एवशब्दात् सुपांसुलुगिति (पा० ७,१,३९) जसो लुक् । अस्मदीयं यज्ञं आगन्तारो भवतेत्यर्थः ॥ (१०) ॥ १

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्येण विरचिते
माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
महानाम्नी-व्याख्यानं समाप्तम् ॥



॥ सामवेदसंहितायां महानाम्न्यार्च्चिकः समाप्तः ॥

---

* "अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति"—इत्यादि निरु० दै० ६, १६ ।

† "या च का च बलकृतिरिन्द्रकर्मैव तत्"—इति निरु० दै० १, १० ।

॥ ॐ नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

तत्र

## ॥ अथ छन्द आर्चिक-परिशिष्टम् ॥ *

अथवा

## ॥ अथ अरण्यगानम् ॥ †



॥ हरिः ॐ ॥

२ १र      २      १    ५      २र
‡ यद्यावइ। इता३१उवा२३। शा२३४ताम्। ह्वा

१    ५      २ १ र र      २
हा३१उवा२३। ई२३४डा। शतम्भूमीः। उता३१उवा

---

* यद्यप्ययं भागो न आर्चिकग्रन्थस्य ऋग्लक्षणशून्यत्वात् प्रत्युतास्य ऋङ्मूलकगानत्व-
मेव स्फुटम् परमेतन्मूलर्चस्तु छन्दस्येवार्चिके दृश्यन्तेऽतस्तस्यैव परिशिष्टमिति व्यव-
ह्रियतेऽस्माभिः; ऋग्गानात्मकस्यास्य सामवेदीय-मन्त्र-भागस्य व्याख्याने ऋगंशस्यैव प्राधा-
न्यात् भाष्यकारादिभिस्तथैव व्यवहारात्, गानग्रन्थानेव प्रधानीकृत्याच प्रकाशेऽप्रवृत्तत्वा-
दृक्परिचय-पूर्वकस्यैव गानपरिचयस्य न्याय्यत्वाच्च। न सन्ति चेह नु तासां साम्नां
कतिपयाना मृचः, तेषां स्तोभमात्र-मूलकत्वात्; तेऽखिलस्तोभाः सायणादिभिर्व्याख्याता
नवेत्यद्यापि न ज्ञायते परं तत्पुस्तकन्त्वधीतमस्माभिरार्चिकपद-ग्रन्थाध्ययनात् प्रागेवेत्ति
तमपि विच्छिद्य यथागानमिह दर्शयिष्ये।

† अरण्ये गेयत्वादस्य पूर्वप्रदर्शितगेयगानात् पार्थक्यमरण्यगानमित्यभिधेति च।

‡ "अद्रौ वैरूपाणि। अजस्रवैरूपम्"—इति आ० ब्रा० २, १, ८।

२ ५ २र २ ५ १
२३। सी२३४यूः। हाहा३१उवा२३। ई२३४डा। न

र २ १ र २ २ ५ २र
त्वावज्रिंत्सहस्रꣳसू। रिया ३ १उवा २ ३। आ२३४नू। हा

२ ५ . १ र २
हा३१उवा२३। ई२३४डा। नजातमाष्टरो३। आउ।

१ २ ५ २र १ १११११
वा२३। दा२३४सो। हाहा३१उवा२३। इट्इडा२३४५॥१॥

१र १ १ १ १र २ १ र र २ १ ऽ ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

१ र २ २ १ र १ १
नात्वावज्रिन्। सहस्रꣳसूरिया२आनू२। नाजा२त

१ २ १ १ २ ५र र १
मा। ष्टरो२३। दा२सा२३४औहोवा। दिशंविशꣳह

१ र २ १ १ १११
स्। अश्वाशिशूमती३। इट्। इडा२३४५॥ २॥

१र २ र १ १र २ १ र र २ १ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

१र १ १र ऽ २ १ र २
औवा२। हꣳ२। ३। औवा३। हाउवा। नत्वावज्रिं

* "हस्वा च"—इति आ० ब्रा० ३, २, ८। वैरूपमिति शेषः।

† "पञ्चनिधनञ्च"—इति आ० ब्रा० ३,२,८। वैरूपमिति शेषः।

१ २ १र २र १ २ १र १ १र ऽ २
त्सहस्रꣳसूर्य्या अनु। ओवा२। हꣳ२। ३। ओवा३। हा

१र
उवा। नजातमष्टरोदसी। ओवा२। हꣳ२। ३। ओ

ऽ २ १ १र १
वा३। हाउवा। दिशंविशꣳहस्। ओवा२। हꣳ

१र ऽ २ १ र २ र १र
२। ३। ओवा३। हाउवा। अश्वाशिष्ठुमती। ओवा

१ १र ऽ २ ११११
२। हꣳ२। ३। ओवा३। हाउवा३। इट्इडा२३४५॥३॥

१ र २ र १ १र २ १ र र २ १ ऽ ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

२ऽ ऽ ऽ १ र २ १ १ १र १र १ २ऽ
हाउहाउहाउवा। नत्वावज्रिन्त्सहस्रꣳसूर्य्या अनु। हा

१ र २ १र २र २ऽ १
उ३वा। नजातमष्टरोदसी। हाउ३वा। दिशंविशꣳ

२ऽ १ र २ र २ऽ २
हस्। हाउ३वा। अश्वाशिष्ठुमती। हाउ३वा। यु

१ २ र १ र २ऽ १ १११
वतिस्वकुमारिणी। हाउ३वा३। इट्इडा२३४५॥४॥

१ र २ र १ १र २ १ र र २ १ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

---

* "षष्ठिधनञ्च"—इति आ० ब्रा० ३,२,८। वैरूपमिति शेषः।

† "सप्तनिधनञ्च"—इति आ० ब्रा० ३,२,८। वैरूपमिति शेषः।

२ऽ १ र २ १ २ १र२र१ २ऽ
हाउ३वा। नत्वावज्रिन्त्सहस्रꣳसूर्य्याअनु। हाउ३वा।
१ र २१र २र २ऽ १ २ऽ
नजातमष्टरोदसी। हाउ३वा। दिशंविशꣳहस्। हा
१ र २ र २ऽ १र २ऽ
उ३वा। अश्वाभिश्शुमती। हाउ३वा। सूवः। हाउ
१र २ऽ १ १ १ १ १
३वा। ज्योतिः। हाउ३वा३। इट्इडा२३४५॥ ५॥

१ र २ र १ १र २ १ र र २ १ १ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।
२ऽ १ र २ १ २ १र१र१ २ऽ १
हाउ३वा। नत्वावज्रिन्त्सहस्रꣳसूर्य्याअनु। हाउ३वा। न
र २१र २र २ऽ १ २ऽ
जातमष्टरोदसी। हाउ३वा। दिशंविशꣳहस्। हाउ३
१ र २ र २ऽ २ १ १ र १ र
वा। अश्वाभिश्शुमती। हाउ३वा। युवतिस्वकुमारिणी।
२ऽ १र २ऽ १र २ऽ
हाउ३वा। सूवः। हाउ३वा। ज्योतिः। हाउ३वा३।
१ १ १ १ १
इट्इडा२३४५॥ ६॥

१ र २ र १ १र २ १ र र २ १ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

---

* "षष्ठानिधनञ्च"—इति षा० ब्रा० ३,२,८। वैरूपमिति शेषः।

† "द्वादशनिधनञ्च"—इति षा० ब्रा० ३,२,८। वैरूपमिति शेषः।

१ २ र १ २ १ र १ १ १
ओहहाउहाउ। ओहहाउवा। नत्वावज्रिन्त्सहस्रं
१र २र १ ३र २र १र २र ३र २र १र २र ३र २र १र २र
सूर्य्याअनु। ओहाओहा। ओहाओहा। ओहाओहा
२ १ र २ १र २र १ २ र
३। हाउवा। नजातमष्टरोदसी। ओहहाउहाउ।
१ २ १ ३र २र १र २र
ओहहाउवा। दिशंविश्वंहस्। ओहाओहा। २।
३र २र १र २र २ १ र २ र १ १
ओहाओहा ३। हाउवा। अश्वाभिपुमती। ओह
र १ २ १र र ३र २र १र २र
हाउहाउ। ओहहाउवा। सूवाः। ओहाओहा। २।
३र २र १र २र २ १र १ २ र
ओहाओहा३। हाउवा। ज्योतिः। ओहहाउहाउ।
१ २ १र र ३र २र १र २र ३र २र १र २र
ओहहाउवा। इडा। ओहाओहा। २। ओहाओहा
२ १ १ र १ २ र १ २
३। हाउवा। इट्। इडा। ओहहाउहाउ। ओहहाउ
२ २ २ ३ १ १ १ १
वा३। हौ३। आ३। ऊ३। ई२३४५॥ ७॥
१ र २ र १ १र २ १ र र २ १ ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

* "पुष्यस्व"—इति व्या० ब्रा० ९,२,८ वैकमपिति शेषः।

२र ३र र १ र २र ३र २ १ र २ ३ ५
हाओवा। २। ऊवे। हाओवा। ऊवे। हाओ२३४वा।
१ र र १ २ १र २र १ २र ३र र १ र २र
नत्वावज्रिन्त्सहस्रꣳसूर्य्याअनु। हाओवा। ३। ऊवे। हा
१र र १ र २ ३ ५ १ र २ १र २र
ओवा। २। हुवे। हाओ२३४वा। नजातमष्टरोदसी।
२र ३र र १ र २र १र र १ र १ ३र २ १
हाओवा। ४। हुवे। हाओवा। ४। नाजातमष्टरोदसा
२र १ ३ ५ २र ३र र १ र २र ३र
इ। ऐहोइ। आ२३४इही। हाओवा। ५। हुवे। हाओ
र २ऽ ऽ ऽ १ ऽ २ऽ ३ १ १ १ १
वा। ५। हैहैहैहोवा३। हाउवा३। ऊ२३४५॥ ८॥

एतेषां व्याख्यानम्—१भा० ५७१ पृष्ठे द्रष्टव्यम्। १—८

२र र २ १ ऽ २र र १र
* हाउपिबासुता। स्यरसि। नाः। औहौहोवा२।
१ २ १ र २ १र २र र १र १ २
इहा। मत्स्वानइन्द्रगोम। ताः। औहौहोवा२। इहा।
२र १ र २र १र २र १ २र र १र १ २
आपिर्नोबोधिसधमाद्येवृ। धाइ। औहौहोवा२। इहा।
१र १ २र र १र १ २ २ १ १
अस्माꣳअ। वा। औहौहोवा२। इहा। तुताइ। धा

---

* "अन्तरिक्षे द्वे"—इति आ० ब्रा० ३,१,८। तत्र पर्वमिदम्।

२　　५र र　　२१　र र　　२　　१
र्‍या२३४औहोवा । सुष्टुभस्तुभोश्वाशिष्ठुमका३न् । इट्

१ १ १ १
इडा२३४५ ॥ ९ ॥

२र　　२　१　　१ २　　१　२
* पिबासुता । स्यरसिनः । मात्स्वा१नाई२ । आ । औ३

र र २　　२　५　　२१र　　१　७
होवाहाउवा३ । ई३४डा । द्रगोमतः । आपिनोंबो२ ।

१　　२ र र २　　२　५　१　र र र
आ । औ३होवाहाउवा३ । ई३४डा । धिसन्धमाद्येवृधे ।

१ २　　　१　२ र र २　　२　५
आस्मा१अवा२ । आ । औ३होवाहाउवा३ । ई३४डा ।

२ १　　१　२　५र र　　२१　र र　　२
तुताइ । धार्‍या२३४औहोवा । विष्टुभस्तुभोश्वाशिष्ठुम

२　　१ १ १ १
का३न् । इट्इटा२३४५ ॥ १० ॥

अनयोर्व्याख्यानम्—१भा० ४९६ पृष्ठे द्रष्टव्यम् । ९,१०

३र　　२र ३ र　　४ ५　　१　　१ २
† हाह । होइया । ३ । पावी । अन्ताइ । वितता३

१　　१ २ ३　　५　　४ ५　　१र　　२ १ २
ब्र । ह्मणस्पा२३३ताइ । प्राभूः । गात्रा । णी३परि

* "अन्तरिक्षे द्वे"—इति आ० ब्रा० ३,२,८ । तत्रोत्तरमिदम् ।

† "अरिष्टे द्वे"—इति आ० ब्रा० ३, १, ८ । तत्र पूर्वमिदम् ।

१ १ २ ३ ५ ४ ५ १ २ १
याइ। षिवाइस्वा२३४ताः। आता। प्रता। नू३र्न

२ १र १र २ ३ ५ ४ ५ १ १ २
तदा। मोअस्म्र२३४ताइ। शार्त्ता। सआइत्। वहन्तः।

१ २र ३ ५ ३र २र ३ र ३र५४५ ५र
सन्तदाशा२३३ता। हाह। होइया। ३। होइडा।

३ ५
२। हो२३४५इ। डा॥ ११॥

३र २ १ १ १ ४ ५ १ १ २
* हाह। हौ३४५। ३। पावी। अन्ताइ। वितता

१ २ ३ ५ ४ ५ १र २ १ २ १
इम्ब्रह्मणस्पा२३४ताइ। प्राभूः। गात्रा। णी३परियाइ।

२ ३ ५ ४ ५ १ २ १ २ १र १र २ ३
षिवाइस्वा२३४ताः। आता। प्रता। नू३र्नतदा। मोअस्म्र

५ ४ ५ १ १ १ १ २र ३
२३४ताइ। शार्त्ता। सआइत्। वहन्तः। सन्तदाशा२३४

५ ३र २ १ १ १ ३र५४५ ५र ३
ता। हाह। हौ३४५। ३। होइडा। हो२३४५इ।

५
डा॥ १२॥

अनयोर्व्याख्यानम्—२भा० १०० पृष्ठे द्रष्टव्यम्। ११,१२

---

* "चरिष्ठे द्वे"—इति भा० ब्रा० १, २, ८। तत्रोत्तरमिदम्।

१ २ २र १र २र १ १ २ २
* हावाभी। त्वापूर्व्वपीत। याइ। इहाइ। हाउ

३ ५ २ १ २र १ २ ३र २ १ १ २
वाइ। बृ२३४हात्। इन्द्रास्तोमाइ। भिरायवाः। इहा

२ ३ ५ २ १ २र १ २ ३
३। हाउवाइ। बृ२३४हात्। समाइचीना। सऋ

२ १ १ १ १ २ २ ३
भवाः। समा२स्वरान्। इहाइ। हाउवाइ। बृ२३४

५ २ १ २ १ २२र २ १ १ २ २ ३
हात्। रुद्रागृणा। तपूर्वियाम्। इहाइ। हाउवाइ। बृ

५ २र २ १
२३४हात्। ए। बृहत्॥ १३॥

१ ऽ २ १र र र १ २ २
† अभीहाउ। त्वापूर्वपीतयाइ। इह। हा३१उवा

३ ५ १ र र र १ २ २
२३। सू२३४वाः। इन्द्रस्तोमेभिरायवाः। इह। हा३१

३ ५ ३ र १र १र
उवा२३। सू२३४वाः। समी। चीनासऋभवःसमस्वरान्।

१ २ २ ३ ५ २१र र
इह। हा३१उवा२३। स्व२३४वाः। रुद्रागृणन्तपूर्वियां-

---

*,† "अहरीते द्वे"—इति आ० ब्रा० १, २, ८।

१ २ २ ३ ५ २ १
म। इह। हा३१उवा२३। सू२३३वाः। ए३। सुवा
१ १११
२३४५ः॥ १४॥

अनयोर्व्याख्यानम्— १भा० ५२८ पृष्ठे द्रष्टव्यम्। १३,१४

२र र २ १ २ १ऽ २ऽ
* हाउपिबासुता। स्यरसिनाः। होइ। ३। हाउ
१ र १ र २ १र २ १ २ऽ
३वा। सहोनरः। मत्स्वानइन्द्रगोमताः। होइ। ३। हा
१ १ र २र १ र २र १ २ १
उवा। सत्यमोजः। आपिर्नोबोधिसधमा३। होइ। ३।
२ऽ १ र २ र १ २ १ २ऽ
हाउ३वा। स्वर्ज्योतिः। दियेवधे३। होइ। ३। हाउ
२र१र १ १र २ र १ २ १
३वा। एस्यादिदम्। ३। अस्माँ अवन्तुतेधियाः। हो
२ऽ १र २र १र २ १ २र
इ। ३। हाउ३वा। द्यौरक्रान्भूमिरततनत्समुद्रँ समचू
१ १ १ १ १
कुपत्। इ इडा२३४५॥ १५॥

अस्य व्याख्यानम्—१भा० ४९६ पृष्ठे द्रष्टव्यम्। १५

२र २ १ २ १
† हाउ३। बृहात्। ३। बृहत्। ३। बृहात्। ३।

---

* "वरुणस्य देवस्थानम्"—इति ग्रा० ग्रा० ३, २, ९।

† "बृहद्देवस्थानम्"—इति ग्रा० ग्रा० ३, २, ९।

२ १ २ र १ २ २ र १ २
बृहदिन्द्रायाऽ३गाया१ता२। मरुतोवृत्राऽ३हान्ता१मा२म्।
२र र १ २ २र र र १ २
येनज्योतिरजनयन्दृ३तावा१र्द्धा२ः। देवन्देवाया३जागृ१वी
२र २ १ २ १
२३। हाउ३। बृहात्। ३। बृहत्। ३। बृहात्। २।
२ १ २र २ १
बृहा३१उ। वा२। ए। बृहत्। ३॥ १६॥

अस्य व्याख्यानम्—१भा० ५२४ पृष्ठे द्रष्टव्यम्। १६

१र १र १ २ ३र
* ऐराया२त्। ३। ऐराया२३त्। सुवरा३४। हा
२ २र र १ २ २ र ८ ऽर १ १
होइ। पुनानःसोमा३धारा१या२। अपोवसानो३आर्षा
२र र र १ २ २ र
१सी२। आरत्नधायोनिम्टतस्या३साइदा१सी२। उत्सो
र र १ २ १र १र
देवोहो३राण्या१या२ः। ऐराया२त्। २। ऐराया२३त्।
१ २ ३र २ ५र र २ २र१र र र
सुवरा३४। हाहा३४। औहोवा। ए३। देवादिवाज्यो
२ १ १ १ १
तो२३४५ः॥ १७॥

अस्य व्याख्यानम्—२भा० ७६ पृष्ठे द्रष्टव्यम्। १७

२र १र २ २ र र २र २ १
† हावोहोहाउ। अभित्वावार्षा३भासुताइ। अभि

*,† "ऐरयैरिणे द्वे"—इति भा० ब्रा० ३, २, ९।

र २र १र २ र र २र १र
त्वावा। षाभासुताइ। अभित्वावार्षा३भासुताइ। औहो

२र १र २ र २र २ १ १र
हावौहो२। सुतꣳह्वजामी३पीतयाइ। सुतꣳह्वजा। मी

१र २ र २र २र १र २
पीतयाइ। सुतꣳह्वजामी३पीतयाइ। हावौहोहाउ।

२ र र २र १ १र २र १र
त्म्यावियाश्नू३ह्वीमदाम्। त्म्याविया। श्नूह्वीमदाम्।

२ र र २र १र २र १र ५ २
त्म्यावियाश्नू३ह्वीमदाम्। औहोहावौहो२। उहुवा

२ १ १
३हाउ। वा३। हस्॥ १८॥

अस्य व्याख्यानम्—१भा० २६८ पृष्ठे द्रष्टव्यम्। १८

२र २ ३ ५ २र
* हाउ३। हौवाओ२३४वा। हाहा३१उवा२।

२ र १ २र १र २र १ र २ १ र र २ १र २र र
पुनानःसोमधारया। अवोबृहदिहाइडा। अपोवसानो

१ र २ १ र र १र २ १र र २ १ २ २
अर्षसि। अवोबृहदिहाइडा। आरत्नधायोनिम्रतस्यसी

१ र १ र र १ र २र १र २ १ २ १ र
दसि। अवोबृहदिहाइडा। उत्सोदेवोहिरण्ययः। अवो

२ १ र र २र २ २ ५ २र
बृहदिहाइडा। हाउ। ३। हौवाओ२३४वा। हाहा३१

* "आङ्गिरसे द्वे"—इति आ० ब्रा० १, २, ९। तत्र पूर्वमिदम्।

१ २ १ २१र २१र २१र २र १ र २
उवा२। सुवर्ज्जगन्ममह्स्पृथिव्यादिवमाशर्केमवाजिनोय

१ १ १ १ १ ११
मम। ह्स्। इट्इडा२३४५॥ १९॥

अस्य व्याख्यानम्—२भा० ७६ पृष्ठे द्रष्टव्यम् । १९

२र र र र र र र र १र २र १ २
* औहोवाऔहोवाऔहो३वा। तवेदिन्द्रावमंवसु।

१ २ १ २१र २ १ २र १
त्वम्पुष्यसिमध्यमम्। सत्राविश्वस्यपरमस्यराजसि। न

२र १र २ र २र र र र र र र र १
किष्ट्वागोषुवृण्वते। औहोवाऔहोवाऔहो३वा। सुव

२ र१र२र १ २र १ २१र २र १ र २१ १ २
र्ज्जगन्मदेवानामवसावयᳪशर्केमवाजिनोयमम्। सुवर्ज्जगन्म

१ २१र २१र १ २१ १११
मह्स्पृथिव्यादिवमा। ह्स्बृहन्नमा२३४५ः॥ २०॥

१र २र १र २ २ १ २ ५र र
† औहोऔहो३वा। ३। इडा२३भिरा३४। औहोवा।

१ र १र १ २ १ २ १ २१र २
तवेदिन्द्रावमंवसु। त्वम्पुष्यसिमध्यमम्। सत्राविश्वस्य

१ २र १ २र १र २ र १र २र १र २
परमस्यराजसि। नकिष्ट्वागोषुवृण्वते। औहोऔहो३

* "आङ्गिरसे द्वे"—इति आ० आ० ३, १, ९। तत्रोत्तरमिदम्।

† "बार्हस्पत्यञ्च"—इति आ० आ० ३, २, ९।

२ १ २ ५र र १ र र २ १
वा। ३। इडा२३भिरा३४। औहोवा। इडासुवोबृहन्नमा
१ १ १ १
२३४५ः॥ २१॥

अनयोर्व्याख्यानम्—१भा० ५५७ पृष्ठे द्रष्टव्यम्। २०,२१

२र २र र र र र २र
* हाउ। ३। औहोआत्वासहस्रमाशताम्। हाउ
२ १ २ २र २ १ २
३। युक्तारा१था२३इ। हाउ। ३। हिराण्या१या२३इ।
२र १ २ २र १ २
हाउ। ३। ब्रह्मायू१जा२३ः। हाउ। ३। हारयइ।
२ १ २ २र १ २ २र
इन्द्राइश्रा१इना२३ः। हाउ। ३। वहान्तू१सो२३। हा
२र र २ २ १ ऽ ५ ५ ५
हाउहाउ। मपी३। ता२३४याइ। उहुवा३हाउ। वा।
१
हस्॥ २२॥

अस्य व्याख्यानम्—१भा० ५०७ पृष्ठे द्रष्टव्यम्। २२

२ र र र र र र २र र २ र
† उहवाओहा। औहोवा। शन्नोदेवीः। उहुवा।
र र १र ३र २ २ १ २ २ १ २
ओहा। औहोवाहाउ। वा। आवत्। अभिष्टा२३या

* "भारद्वाजञ्च"—इति सा० ब्रा० ३, ९, ६।

† "आथर्वणञ्च"—इति सा० ब्रा० ३, २, ९।

२ र र र   २र र र   २ र   २ र
३इ । उहुवाओहा । औहोवा । शन्नोभवा । उहुवा
र र   १र   ३र २   १ २   २ १र   २
ओहा । औहोवाहाउ । वा । हुवः । तुपीता२३या३
२ र र र   २र र र   २ र   २ र र
इ । उहुवाओहा । औहोवा । शंयोरभी । उहुवाओ
र   १र   ३र २   २   १ २   २ १   २
हा । औहोवाहाउ । वा । ज्योतिः । स्रवन्तू२३ना३ः ।
२ र र र   १र   ३र १   २   ३ १ १ १ १
उहुवाओहा । औहोवाहाउ । वा३ । ई२३४५ ॥ २३ ॥

अस्य व्याख्यानम्—१भा० १४३ पृष्ठे द्रष्टव्यम् । २३

२४ (चतुर्विंशतितमं) साम—२भा० २४४ पृष्ठे मुद्रितम् ।

१र   २ १ २र १   २ १ र २
* हाउ । ३ । बृहद्भामम् । ३ । बृहत्पार्थिवम् । ३ ।
२ १ २ १ २   २ १   २ १ २र १
बृहदन्तरिक्षम् । ३ । बृहद्दिवम् । ३ । बृहद्भामम् । ३ ।
२ र   १ २   २र र   र १ २
कयानश्चित्रा२आभू१वा२त् । ऊतीसदावृ३धाःसा१खा२ ।
२ र   १ २   २र   २ १ २र १
कयाशचिष्ठा३यावा१र्त्ता२३ । हाउ । ३ । बृहद्भामम् ।
२ १ र २   २ १ २ १ २   २ १
३ । बृहत्पार्थिवम् । ३ । बृहदन्तरिक्षम् । ३ । बृहद्दिवम् ।

* "बृहतीवामदेव्ये द्वे"—इति आ० ब्रा० २, २, ९ । तत्र पूर्वमिदम् ।

१ १ २र १ २ १ र १र ३र १ २
३। बृहद्वामम्। २। बृहद्वामम्। औहोवाहाउ। वा।

र २ १२र १ २र २ १ र १र १ २र २र १र र
ए। बृहद्वामम्। ए। बृहद्भोवामम्। ए। वामेभ्यो

२र १ २र २र १ २र १ १र १
वामम्। ए। वामम्। वामम्। वामम्॥२५॥

३ २ १ १ २ १ २ १ २ २ १र
* बृहद्वामम्। २। बृहद्वामम्। कयानश्चाइ।

३ ५ २र १ २ १ १ २ ३ ५ २
चआ२भू२३४वात्। ऊताइसदा। वाई:सा२३४खा। क

१र ० ३ ५ ३ २ १ १ ३ २
याशचाइ। छया२वा२३४र्त्ता। बृहद्वामम्। २। बृहत्।

१र १ ऽ २ २र २ १ २र १
वामा३उवा। ए। बृहद्वामम्। ३॥ २६॥

अनयोर्व्याख्यानम्—१भा०३८४पृष्ठे द्रष्टव्यम्। २५,२६

२र र र र २ २र १र र
† औहोइत्वामिद्धिहवामहा३ए। सातौवाजा।

१ २ ३ ५ १ २ ३र ४र ५ २ १
स्याकारारा२३४वाः। तुवा३४। औहोवा। वृत्राइषुवा

१ २ १ २ ३ ५ १र र
ई। द्रासा३१त्। पतिन्ना२३४राः। त्वाङ्काष्ठा३४।

---

* "बृहतीवामदेव्ये"—इति आ० ग्रा० ३, १, ९। तयोत्तरमिदम्।

† "भरद्वाजस्य बृहत्"—इति आ० ग्रा० १, २, ९।

३र ४र ५　　१　　ऽ　　५　　२
औहोवा । स्२अर्वा२३४ । ताः । उहुवा६हाउ।
५　　१
वा। हस॥ २७ ॥

अस्य व्याख्यानम्—१भा०४८२ पृष्ठे द्रष्टव्यम् । २७

॥ इति ग्रामे अरण्यगाने प्रथमस्यार्द्धप्रपाठकः॥

॥ हरिः ॐ ॥

२ २　१　　२ १　　२र　१　　२र१४ ५
* इया३होइ। ३। इन्द्रन्नरो। ने३मधि। ताहवन्ताइ।
२ १र　　२ १　२　२ ४ ५　　२र१र　　२　१
यत्पारियाः। युनज। ताइधियस्ताः। शूरोनृषा। ता३श्रव।
२ ३ ४र ५　　२र १र　　२ १र　२र ३ ४ ५　　३ २
संस्वकामाइ। आगोमताइ। व्रजेभ। जातुवन्नाः। इया
१　　२ २　१　　२　　५र र　　२ १ १
३होइ। २। इया३होरे। या२३४औहोवा। ई२३
१ १
४५॥ १॥

३र २र ३ र　　२ १　　र १　　२र ३ ४ ५
† औहोइया। ३। इन्द्रन्नरो। ने३मधि। ताहवन्ता
२ १र　　२ १　　२　　३ ४ ५　　२र१र　　२
इ। यत्पारियाः। युनज। ताइधियस्ताः। शूरोनृषा। ता

*,† "वसिष्ठ-जमदग्न्यो रर्को द्वावगस्त्य-जमदग्न्योर्वा"—इति आ० ब्रा० ३,२,१०।

१ २ ३ ४र ५ २र १र २ १र २र ३ ४
३अव। सअकामाइ। आगोमताइ। व्रजेभ। जातुव

५ ३र २र ३ र ३र २ ३ १ १ १ १
न्नाः। ओहोइया। २। औहो३४५याई५६। ई२३४५ ॥२॥

अनयोर्व्याख्यानम्—१भा० ६४१—पृष्ठे द्रष्टव्यम्। १,२

३ २र २ ३ २र १ २ १र
* अयामायाम्। २। अयामायाम्। स्वादिष्ठ

३ २ ३ १ ३ २ ३ ५
या२। मदाइष्ठा२३४या। पवस्वसो२। मधारा२३४या।

१ र ३ २ ३ ५ ३ २र १ २
इन्द्रायपा२। तवाइसू२३४ताः। अयामायाम्। २।

३ २र १ ३ ५र र ३ १ १ १ १
अयाम्। आ२। या२३४। औहोवा। ई२३४५ ॥ ३ ॥

अस्य व्याख्यानम्—१भा० १०पृष्ठे द्रष्टव्यम्। ३

२र ०र र र र र र १ २ ३
† हाउ। ३। औहोवाएहियाहाउ। धार्त्ता। दाइ

२ र १ २ १ र १ २ १ १ २र २र
वःपवतेक्त्वियः। रसोरसो। रसः। हाउ। ३। औ

र र र र र १ २ १ र २र १र २
होवाएहियाहाउ। दाद्धाः। दाइवानामनुमादियः।

१ २ १ २ १ २ २र २र र र र र
नृभीनृभीः। नृभीः। हाउ। ३। औहोवाएहिया

* "स्वाशिरामर्कः"—इति आ० ब्रा० ३, २, १०।

† "दीर्घतमसोऽर्कः"—इति आ० ब्रा० ३, २, १०।

हाउ। हारी। सार्जानोअत्योनस। त्वभीस्त्वभीत्वभीः। हाउ। ३। औहोवाएहियाहाउ। वार्था। पाजाꣳ सिक्तणुषेनदी। षुवाषुवा। षुवा। हाउ। ३। औहो वाएहिया३हाउ। वा३। ई२३४५॥ ४॥

अस्य व्याख्यानम्—२भा० १८४ पृष्ठे द्रष्टव्यम्। ४

* हाउ। ३। प्रवइन्द्रायबृहाताइ। हाताइ। २। हाउ। ३। मरुतोब्रह्मअर्चाता। चाता। २। हाउ। ३। वृत्रꣳहनतिवृत्रहाशतक्रातूः। क्रातूः। २। हाउ ३। वज्रेणशतपर्वाणा। र्वाणा। २। हाउ। ३। वा३। इट्इडा२३४५॥ ५॥

† हाउ। ३। सन्त्वानोनवुः। ३। अनोनवुः। ३। मरुतः। ३। विश्वस्मात्। ३। प्रवइन्द्रायबृहाताई। हा-

* "मरुतामर्कौ द्वौ"—इति ब्रा० ब्रा० ३, २, १०।

† "संस्तोभो घोस्वरः"—इति ब्रा० ब्रा० ३, २, १०। मरुतामित्येव।

२   २ र   १ २   १ २   २
ताई। २। मरुतोब्रह्मअर्चाता। चाता। २। वृत्रᳪह
र   १ २   १ २   २ र   १ २
नतिवृत्रहाशतक्रातूः। क्रातूः। २। वज्रेणशतपर्वाणा।
१ २   २र   १ र २र   १ र २
र्वाणा। २। हाउ। ३। सन्त्वानोनवुः। अनोनवुः।
२ १   १ २र   २   ३
३। मरुतः। ३। विश्वास्मात्। २। वाइश्वस्मा२३४
५र र   ३ १ १ १ १
औहोवा। ई२३४५॥ ६॥

अनयोर्व्याख्यानम्—१भा० ५३२पृष्ठे द्रष्टव्यम्। ५,६

१   २   १   २   २   र र   १ २
* होहोवा। ई। इया। ३। अग्निमूर्द्धादी३वाःका१
२   र   १ २   २ र र र
कूरत्। पतिःपृथिवी३याआ१या२म्। अपाᳪरेताᳪसी३
१ २   १ २   १   २   १ २
जाइन्वा१ती२। होहोवा। ई। ईया। २। होहोवा।
१   १   ३   ५र र   २र   २ १ २र १र   २
ई। ई२। या२३४। औहोवा। ए। अग्निमूर्द्धाभव
१
द्दिवः॥ ७॥

अस्य व्याख्यानम्—१भा०१३५ पृष्ठे द्रष्टव्यम्। ७

---

* "अग्नेरर्कः"—इति आ० ग्रा० ३,१,१०।

१ २　१ २　१ र २　४ ५　१र
* हावा। ईया। औ२३होआ३। आयाम्। पूषा

२ २ ३　५　४ ५　१　१र २ ३
२। रयिर्भा२३४गाः। सोमाः। पुना२। नोअर्षा२३

५　४ ५　१　३ २ ३　५　४ ५
४ती। पातीः। विश्वा२। श्वभूमा२३४नाः। वाया।

१　१ २ ३　५　१ १　१ २　१
श्चद्रो२। दर्सीऊ२३४भाइ। हावा। ईया। औ२३

र २　५र र　५१११११
होआ३४। औहोवा। ई२३४५॥ ८॥

अस्य व्याख्यानम्—२भा० १५५ पृष्ठे द्रष्टव्यम्। ८

९, १०, ११ सामानि—२४६, २४७, २४८ पृष्ठेषु मुद्रितानि।

१　१ २ १　१　२ १
† पाती२ः। ३। दिवआ। पाती२ः। ३। अन्तरि

२ १　१　१र　२　१　१
क्षस्या। पाती२ः। ३। पार्थिव। स्या। पाती२ः। ३।

२ १र र　२र　१　१　१　२ र १
अपामोषधी। नाम्। पाती२ः। ३। विश्वस्यभूत।

१　१　१　१ ३　२र र
स्या। पाती२ः। पाती२३ः। पा२ता२३४। औहोवा।

२र　१　२ १　२र　१　२ १　२　२र　१ २ १र
ए। पतिर्दिवः। ए। पतिरन्तरिक्षस्य। ए। पतिःपार्थि

* "प्रजापतेरर्कः"—इति ब्रा० ब्रा० ३, २, १०।

† "अर्कपीवास्य"—इति ब्रा० ब्रा० ३, २, १०।

२ २र १ २ १र र २र र २र १ २ १ १ र १
वस्य। ए। पतिरपामोषधीनाम्। ए। पतिर्विश्वस्यभूत

२र १ र ३ १ १ १ १
स्य। ए। सुवर्ज्योतीर२३४५ः॥ १२॥

अस्य मूलं न ऋक्, अपि तु स्तोभः, सचैषः—

१ २र ३ २ ३ १ २ १ २र ३
पतिः। दिव। अन्तरिक्षम्। स्य। पार्थिवस्य। अ

२ १ २र १ २र ३ १ २र
पाम्। औषधीनाम्। औष। धीनाम्। विश्वस्य।

३ १ २ १ २ १ २र १ २र
भूतस्य। आयुः। चक्षुः। ज्योतिः॥ १॥ ६॥ १२॥

१३ साम २भा० २४९ पृष्ठे मुद्रितम्।

१ १ २ ५ २ १ १ २
* इय। होइ। इयइयई३या। इय। होइ। इय

५ २ १ १ २ ५ २ २ १
इयई३या। इय। होइ। इयइयई३या। इन्द्रन्नरो।

२ १ २र ३ ४ ५ २ १र २ १ २
ने३मधि। ताहवन्ताइ। यत्पारिया:। युनज। ता

३ ४ ५ २र १र २ १ २ ३ ४र ५
इधियस्ताः। शूरोनृषा। ता३श्रव। संश्वकामाइ।

२र १र २ १र २र ३ ४ ५ १ १
आगोमताइ। व्रजेभ। जातुवन्ना:। इय। होइ।

---

* "अर्कं पुष्पे द्वे"—इति आ० गा० ३, २, १०। तत्र पूर्वमिदम्।

२ ऽ २ १ १ १ १ ३
इयइ्यईइया। २। इयहोइ। इयइय। ई२। या२३४।
५र र ३ १ १ १ १
औहोवा। ई२३४५॥ १४॥

१ १ २ ऽ २ २ १
* उव। होइ। उवउवऊ३वा। ३। इन्द्रनरो।
२ १ २र ३ ४ ५ २ १र २ १ २ ३ ४
ने३मधि। ताहवन्ताइ। यत्पारियाः। युनज। ताइधिय
५ २र १र २ १ २ ३ ४र ५ २र १र
स्ताः। शूरोनृषा। ता३श्रव। संश्वकामाइ। आगो
२ १र २ र ३ ४ ५ १ १ २
मताइ। व्रजेभ। जातुवन्नाः। उव। होइ। उवउ
ऽ २ १ १ २ १ १
वऊ३वा। २। उव। होइ। उवउव। ऊर। वा२३४।
५र र ३ १ १ १ १
औहोवा। ई२३४५॥ १५॥

अनयोर्व्याख्यानम्— १भा० ६४२ पृष्ठे द्रष्टव्यम्। १४,१५

२र २र ३ ४र ५ २र १र
† हाउ। ३। आज्यदोहम्। ३। मूर्द्धानन्दायि।
२ १ २ ३ ४ ५ २र १र २ १ र १र २
वा३अर। तिम्पृथिव्याः। वैश्वानराम्। ऋतआ। जात

* "अर्कपुष्पे द्वे"—इति आ० ब्रा० २,१,१०। तत्र द्वितीयमिदम्।

† "वैश्वानरस्य त्रीण्याज्यदोहान्याज्यदोहानि वा"—इति आ० ब्रा० १,२,११। तत्र प्रथम मिदम्। ज्येष्ठसामाज्यदोह मिति वैदिकसङ्केतः।

५,२ ख,

४ ५ २ १ २ १ २ ३ ४र ५
मग्नीम्। कवि॒ᳪसम्ना। जा३मति। थिञ्जनानाम्।
२र १ २ १ २ ३ ४र ५ २र २र ३
आसन्नःपा। त्रा३ञ्जन। यन्तदेवाः। हाउ। ३। आज्य
४र ५ २र ३ ४ ५ २र २र १ २
दोहम्। २। आज्यदो५हाउ। वा। ए। आज्यदोह
२र २र १ ३ १ १ १ १
म्। ए। आज्यदोहा२३४५म्॥ १६॥

२र २र १ २ २र १र
* हाउ। ३। ऊम्। चिदोहम्। ३। मूर्द्धानन्दा
२ १ २ ३ ४ ५ २र १र २ १ र
ई। वा३अर। तिम्पृथिव्याः। वैश्वानराम्। ऋतञ्जा।
२र ३ ४ ५ २ १ २ १ २ ३ ४र ५
जातमग्नीम्। कवि॒ᳪसम्ना। जा३मति। थिञ्जनानाम्।
२र २ १ २ ३ ४ र ५ २र २र
आसन्नःपा। त्रा३ञ्जन। यन्तदेवाः। हाउ। ३। ऊम्चि
१ २ २ १ २ २ ऽ २ २ ३ १ १
दोहम्। चिदोहम्। चिदो२हाउ। वा३। ई२३
१ १
४५॥ १७॥

२र १ २ २र १र २
† हाउ। ३। च्योहम्। ३। मूर्द्धानन्दाइ। वा३

* ई-निधन माज्यदोह मिति वैदिक-सङ्केतः।

† ऋत-निधन माज्यदोह मिति च वैदिक-सङ्केतः।

१ २ ३ ४ ५ २र १र २ १ र २ ३ ४ ५
अर । तिम्पृथिव्याः । वश्वानराम् । ऋतआ । जातमग्नी

२ १ २ १ २ ३ ४र ५ २र
म् । कविᳬसम्मा । जा३मति । थिञ्जनानाम् । आ

१ १ १ २ ३४र५ २र १
सन्नःपा । त्रा३ञ्जन । यन्तदेवाः । हाउ । ३ । च्यो

२ १ २ २ १ २ १
हम् । २ । च्यो३हाउ । वा३ । ए३ । ऋतम् ॥ १८ ॥

एतेषां व्याख्यानं—१भा० २०५ पृष्ठे द्रष्टव्यम् । १६-१८

२र १र र २१र २ र१र १ ३
* सुरूपकृत्नुमूतये । ३ । सुदुघामिवगोदुहे । जुहूम

२ २र १ २ २र १ २
साइ । द्याविद्यवाइ । २ । द्याविद्यवा३१उ । वा२३ ।

१ १ १
उम् । उम् । उम् ॥ १९ ॥

अस्य व्याख्यानम्— १भा० ३६६ पृष्ठे द्रष्टव्यम् । १९

२र १ २ १ १
† हाउ । ३ । आयि । ही । ३ । आयि । ३ । इया

२ २ १र र १ २ ३ ४ ५ २ १र
हाउ । ३ । पिबासोमाम् । इन्द्र । मन्दतुत्वा । यन्ते-

* "इन्द्रस्य त्रय ऋषभा रैवतो वैराजः शाक्वर इति"—इति ब्रा० ब्रा० २,९,११ । तत्रेदं रैवतऋषभम् ।

† वैराजऋषभ मिदं द्वितीयम् ।

२ १ २ ३ ४ ५ २र १ र २ १
सुषा। वा३हरि। अश्वअद्रीः। सोतुर्बाहू। भ्या३ॱसुय।
२र ३ ४ ५ २र १ २ १
तोनअर्वा। हाउ। ३। आयिही। ३। आयि। ३।
१ २ १ ऽ २ २ ३ १ १ १ १
इयाहाउ। २। इया३हाउ। वा३। ई२३४५॥ २०॥

अस्य व्याख्यानम्—१भा० ८१५ पृष्ठे द्रष्टव्यम्। १०

२ १र र र र र र र २ १ २
* ओ३१म्। ३। स्वादोरेइत्थाएविषूएवतआ। भ्वं
१र १ र र र र र र २ १ २ १
योः। २। मधोरेपिबाएन्तिगोएरियआ। हविः। २।
र र र र र र र र २ ऽ १ र र र
यआएन्द्रेणाएसयाएवरिया। सुवः। २। वृष्णाएमदा
र र र २र १ १र १ र र र र र र
एन्तिशोएभथा। आ। ज्योतिः। २। वस्वीरेअनूएस्वराए
२ १ २ २ ५ १
जियमा। ओ३१म्। २। ओ३१२३४। वा। इट्इडा
१ १ १ १
२३४५॥ २१॥

अस्य व्याख्यानम्—१भा० ८२३ पृष्ठे द्रष्टव्यम्। ११

२र र २र १ र र १
† एपुरोजितो। वोअन्धसःसुतायमादया२ईत्नवा

---

* शाकुर ऋषभमिति तृतीयम्।

† "इन्द्रस्य चयोऽतीषङ्गाः यथापरं रौद्रः"—इति ब्रा० ब्रा० १,२,११।

१ १ २ १२ १२ १ १
यि । इडा । ऊर्चा । तेजातमा२न्धसाः । अथा ।
१ २ २ १२ १ १ १ २ २
दायिवी । सद्भूमिया२ददायि । अथा । ऊग्रम् । श
१ १ १ १ २ २ २
र्ममद्या२यि । अवाः । अथा । अपश्वान७श्रथा१इष्टा३
२ १ २ २ २ १ १ २ १
ना । सखायोदीर्घजार२३द्योयि । क्रायमा३१उवा२३ । इट्
१ ११ १
इडा२३४५ ॥ २२ ॥

अस्य व्याख्यानम्—२भा० ६पृष्ठे द्रष्टव्यम् । २२

१ २ १ २ २ १ १ १
* एआसा । जिवक्कारध्ये यथा२जाउ । इडा । आ
२ २ १ १ १ १ २ २१२ २
सा । व्य७शुर्मदा२या । अथा । धाया । मनोतापृथ
२ १ १ १ २ २१२ १
मामना२यिषा । इडा । आपृह । दक्षोगिरा२इष्ठाः ।
१ १ २ २१२ २ २ १ १
अथा । दाशा । स्वसारोअधिसानो२अव्यायि । इडा ।
१ २ २ १२ १ १ १ २ २ १
श्याइनो । नयोनिमा२सदात् । अथा । मार्जा । तिव
२ ५ १ १ १ १ ११
क्रि७सदनेषुवार२क्का३१उ । वा२३ । इट्इडा२३४५ ॥ २३ ॥

अस्य व्याख्यानम्—२भा० २४पृष्ठे द्रष्टव्यम् । १३

---

* "इन्द्रस्य नयोऽतिषक्ताः अथापरं • •, वासवः"—इति भा० ब्रा० १,२,११ ।

१ ः २१ १ २ १
* एऽआभो। नवन्तश्रा २। इन्दुहश्रा३१उवा २। त

२ १२ १ २ २ १ १ २
रत्समन्दीधावति। प्रायम्। इन्द्रस्यका २। मियमा३१

१२ २ २१ २ २ १ २ २ १२
उवा २। धारासुतस्यान्धसः। वात्सम्। नपूर्वश्रा २।

१ २ १ २ १२ १ २ १
युनिया३१उवा २। तरत्समन्दीधावति। जातम्। रि

१ १ २ १ १ १ १ १
हन्तिमा २। तरश्रा३१उवा२३। इडिडा२३४५॥ २४॥

अस्य व्याख्यानम्—२भा० ५९ पृष्ठे द्रष्टव्यम्। २४

३२ २ ३ ५ २२ २३ २ १२
† हाहु। हौवाश्रो२३४वा। ३। ए। श्रौहोहोवा

२ २ १२ २ २ १२ २ १ २२ १ २२ १ २ १२
हाउ। वा। ईडा। धर्त्तादिवःपवतेकृत्व्योरसः। ई

२ १ २ २२ १२ २ २ १२ २२ १ २ १२ २ १
डा। २। दक्षोदेवानामनुमाद्योनृभिः। ईडा। २। ह

२ २ १२ २२ १ २ १२ २ १ २२ १२ २ २
रिःसृजानोअत्योनसत्वभिः। ईडा। २। वृथापाजाᳪसि

* "इन्द्रस्य त्रयोऽतिषङ्गाः अथापरं ००,००, पार्ज्जन्यो वैश्वदेवो वा"—इति आ०
ब्रा० ३,२,११।

† "प्राजापत्याश्चत्वारः पदस्तोभा गौतमा वा वैश्वामित्रा वैन्द्राग्ना वा"—इति आ०
ब्रा० ३,२,११। अष्टेडपदस्तोभ मिदं प्रथम मिति वैदिकमङ्केतः।

र १र २ ३र १ ३ ५ २र
कृणुषेनदीषुवा१। हाह। हौवाओ२३४वा। ३। ए।
१र र ३र २ १ १र र
औहोहोवाहाउ। वा। ईडा॥२५॥

२र १ ३ ५. २र १र र ३र
* हाउ। ३। हौवाओ२३४वा। ए। औहौहोवा
२ २ २१र २१ २र १र र २र१ २र१ १
हाउ। वा। धर्त्तादिवःपवा। ईडा। तेक्तत्व्योरसः।
१र र १ र २र १र र २ १र २र१ १ १र र १
ईडा। दक्षोदेवानामनुमाद्योनृभिः। ईडा। हरिः
२ र१ र १र र २र १ १ १र र १२र१र
सृजानआ। ईडा। त्योनसत्वभिः। ईडा। वृथापा-
र २ र १र २ २र २ ३ ५
जाꣳसिकृणुषेनदीषुवा१। हाउ। ३। हौवाओ२३४वा।
२र १र र ५ २र २ २ १र र
ए। औहौहोवाहाउ। वा। ईडा॥२६॥

१ २र १र १र २ २र १र र ३र २
† ओहौहोवा२। ओवा२। ए। औहौहोवाहाउ।
२ २१र २१ २र १र र २र १ २र १ २ १ र २र
वा। धर्त्तादिवःपवा। ईडा। तेक्तत्व्योरसः। दक्षोदे
१र र २र १र र २१र.२र १ २ १ २ र १ र
वानामा। ईडा। नुमाद्योनृभिः। हरिःसृजानआ।

---

* षडिड्पदस्तोभ मिदं द्वितीय मिति वैदिकसङ्केतः।

† चतुरिड्पदस्तोभ मिदं तृतीय मिति वैदिकसङ्केतः।

१र र २र १ २ १ २र१र र २ र १र र १
ईडा। त्योनमत्वभिः। वृथापाजाᳪसिक्र। ईडा। औ
२र १र १र २र १र र ३र २ १ २
हौहोवा२। ओवा२। ए। औहौहोवाहाउ। वा। ए
र १र २
षेनदीषुवा१॥ २७॥

२ ३र ४ ५ २र १र र ३र २ २
* आऔहोवाहाइ। ए। औहौहोवाहाउ। वा।
१ १र १ १ २ र १ २ १२ १र
धर्त्ता। दी२। वःप। वा। तेक्रत्व्यः। रसः। दक्षो
२र१र र २ १र २र १ १ १र र १ २ २र१र
देवानामनुमाद्योनृभिः। ईडा। हरिः। सा। जानोअ।
२र १ १ २ १ २र१र र २ र १र २
त्योन। सत्वभिः। वृथापाजाᳪसिक्रणुषेनदीषुवा१।
२ ३र ४ ५ २र १र र ३र २ २
आऔहोवाहाइ। ए। औहौहोवाहाउ। वा।
१र र
ईडा॥ २८॥

एतेषां व्याख्यानम्—२भा०१८४पृष्ठे द्रष्टव्यम्। २५—२८

॥ इति ग्रामे अरण्यगाने प्रथमः प्रपाठकः॥



---

* द्विरिड् पदस्तोभ मिदं चतुर्थ मिति च वैदिकसङ्केतः।

॥ हरिः ॐ ॥

१ २ २ र र १ १
* अभाइमाहे । ३ । चर्षणीधृतम्मघवानाइमूक्थाश्या
२ र र १ १ २र र
२म् । इन्द्रङ्गिरोबृहतीरभ्याइनूषाश्ता२ । वावृधानं
र १ १ २ र १
पुरुहूतᳬसूइवाक्ताश्इभी२ः । अमर्त्यञ्जरमाणन्दीइवाइ
२ १ २ १ १ ३
दाश्इवे२ । अभाइमाहे । २ । अभा२३इ । मा२ । हा
१र र १ २ १ १ १ १ १
२३४ । औहोवा । सर्पसुवा२३४५ः ॥ १ ॥

२ १ २ २ र र
† अभिप्रमᳬहोइराइमाहे । ३ । चर्षणीधृतम्मघवा
१ २ २ र र १ १
नाइमूक्थाश्या२म् । इन्द्रङ्गिरोबृहतीरभ्याइनूषाश्ता२ ।
२र र र १ २ २ र
वावृधानम्पुरुहूतᳬसूइवाक्ताश्इभी२ः । अमर्त्यञ्जरमाण
१ २ २ १ २
न्दीइवाइदाश्इवे२ । अभिप्रमᳬहोइराइमाहे । २ । अ-

---

* "दश संसर्पाणि महासर्पाणि सर्पसामानि वा । अथापरमग्ने च (सर्पमिति शेषः)। * * * अथापरं बाभ्रवाणि चत्वारि (तत्र प्रथममिदम्)"—इति छा० ब्रा० ३,२,१२ ।

† "पृथिव्याश्च (सर्पमिति शेषः)। * * * अथापरं बाभ्रवाणि चत्वारि (तत्र द्वितीयमिदम्)"—इति छा० ब्रा० ३,२,१२ ।

१ १ ० ५२ र
भिप्रमᳲहोइरा२३इ। मा२। हा२३४। औहोवा।
१ २१ ११११
प्रसर्पसुवा२३४५ः॥ २॥

२ऽ २ र१ २ १ र २१ २ऽ
* हाउ३वा। चर्षणीधृतम्मघवानमुक्थ्यम्। हाउ
१ र २ १र २र २ऽ १र र
३वा। इन्द्रङ्गिरोबृहतीरभ्यनूषत। हाउ३वा। वावृधा
२ र१ १२ १ २ऽ १ २ १ २र
नम्पुरुहूतᳲसुवृक्तिभिः। हाउ३वा। अमर्त्यञ्जरमाण
१र २र २ऽ १ २१ ११११
न्दिवेदिवे। हाउ३वा। उत्सर्पसुवा२३४५ः॥ ३॥

एतेषां व्याख्यान—१भा० ७६८ पृष्ठे द्रष्टव्यम्। १—३

२ऽ १ २ १ २ १र २र १
† हाउ३वा। सुवःसᳲसर्पन्तः। तवेदिन्द्रावमंवसु।
२ऽ १ २ १ २ १ २ १
हाउ३वा। सुवःसᳲसर्पन्तः। त्वम्पुष्यसिमध्यमम्।
२ऽ १ २ १ २ २१र २ १ २र
हाउ३वा। सुवःसᳲसर्पन्तः। सत्राविश्वस्यपरमस्यराजसि।
२ऽ १ २ १ २ १ २र १र २ र २ऽ
हाउ३वा। सुवःसᳲसर्पन्तः। नकिष्ट्वागोषुवृण्वते। हाउ-

* "वायोश्च"—इति ब्रा० ब्रा० ३,२,१२। सर्पमिति शेषः। किञ्च "अथापर वाभ्रवाणि चत्वारि"—इति ब्रा० ब्रा० ३, २, १२। तत्र तृतीयमिदम्।

† "अन्तरिक्षस्य"—इति ब्रा० ब्रा० ३,२,१२। सर्पमिति शेषः। किञ्च "अथापरं वाभ्रवाणि चत्वारि"—इति ब्रा० ब्रा० ३,२,१२। तत्र चतुर्थमिदम्।

१ २ १ २ २र १ २१ २ १ २र र
३वा। सुवःसᳲसर्पन्तः। ए। सर्पतप्रसर्पतसुवर्गमेमते-
१
वयम्॥ ४॥

१ २ १ १ २ १
* सुवःसᳲसार्पसᳲसर्पा२। २। सुवःसᳲसार्पसम्।
१ ३ ५र र १र २र १ २
सार२। पार२३४। औहोवा। तवेदिन्द्रावमंवसु।
१ २ १ २१र २ १ २र १
त्वम्पुष्यसिमध्यमम्। सत्राविश्वस्यपरमस्यराजसि। नकि-
२र १र २ र १ २ १ १
ष्ट्वागोषुवृण्वते। सुवःसᳲसार्पसᳲसर्पा२। २। सुवःसᳲ-
२ १ १ ३ ५र र २ १
सार्पसम्। सार२। पार२३४। औहोवा। ए३। सुव-
२ र ३ १११११
र्गमेमार२३४५॥ ५॥

अनयोर्व्याख्यानम्—१भा० ५५७पृष्ठे द्रष्टव्यम्। ४,५

२ र १ १ ३ २ ५ २ २
† स्वपायप्रस्व। पा। इ्हा। ई३या। एवन्तिः। अभि-
र र १ २ २र र र र
प्रियाणिपवतेचा३नोहा१इता२ः। नामानियह्वोअधियेषू-

* "आदित्यस्य च'—इति आ० ब्रा० ३,२,१२। सर्पमिति शेषः। किञ्च "अथापरं * * * पावमानानि चत्वारि। तत्र प्रथममिदम्।

† "दिवस्य"—इति आ० ब्रा० ३, २, १२। सर्पमिति शेषः। किञ्च "अथापरं * * * पावमानानि चत्वारि"—इति आ० ब्रा० ३, २, १२। तत्र द्वितीयमिदम्।

१ २ २र र र १ २ २
३वार्ज्जा१ता २इ। आहर्यस्यबृहतोबृ३हाता१धी२। रथं

१ २ २र १ १
विष्वं च मरुद्दी३चाचा१णा२ः। स्तूपायप्रस्तु। पा।

१२ ऽ २ २र१ १ ३२ १
इहा। इ३या। २। सूपायप्रस्तू। पा। इहा। ई२।

३ ५र र २र २र१ २र २र
या२३४। औहोवा। ए। सूपायप्रस्तूपाय। २। ए।

२र १ २र३ १ १ १ १
स्तूपायप्रस्तूपाया२३४५॥ ६ ॥

अस्य व्याख्यानम्—२भा० १७३ पृष्ठे द्रष्टव्यम्। ६

७,८ सामनी २भा० २५१-२५२ पृष्ठयोर्मुद्रिते।

२र र र र र १२ २र र
* स्वादोरित्थाविषूवताएहाउ। मधोःपिबन्तिगौरि-

र १ २ २र र र र १२ २ र र
याएहाउ। याइन्द्रेणसयावराएहाउ। वृष्णामदन्तिशो-

र १ २ २र र र ऽ २ २ २र
भथाएहाउ। वस्वीरनुस्वराजीयामे३हाउ। वा। ए।

१ २ १ २ १ १ ३ ५र र २र
दिशःप्रदिशःक। पा२। ता२३४। औहोवा। ए।

१र २ र १र २ र ३ १ १ १ १
राजङ्गमेमस्वराजङ्गमेमा२३४५॥ ९ ॥

---

* "माण्डवे द्वे"—इति ब्रा० ब्रा० ३,२,१२। किञ्च "अथापरं * * * "दिशां संसर्पे द्वे"—इति ब्रा० ब्रा० ३,२,१२।

२र र　र　र र १ २　२ र　र
स्वादोरित्थाविषूवताओहाउ । मधोःपिबन्तिगौ-
र १ २　२र र　र र १ २　२ र
रियाओहाउ । याइन्द्रेणसयावराओहाउ । वृष्णा-
र र १ २　२ र　र र २
मदन्तिशोभथाओहाउ । वस्वीरनुस्वराजियामो३हाउ ।
२ २र २ १र २ १ २ १　१　३　१र र
वा । ए । उद्दिशोविदिशःक । पा२ । ता२३४ । औहोवा ।
२र २ १र २ र १र २ र ३ १ १ १ १
ए । विराजङ्गमेमस्वराजङ्गमेमा२३४५ ॥ १० ॥

अनयोर्व्याख्यानम्—१भा० ८३३ पृष्ठे द्रष्टव्यम् । ९,१०

२र र　र　२　२ १　१
* औहोइत्वमिन्द्रप्रतूर्त्तिषू२ए । अभाइवाइश्वाः । आ-
२ ३ ५　१　२ र　र　१　२
सिस्पा२३४र्द्धाः । आशस्तिहाजनितावृ । त्तू२३रसाइ ।
१　र २ ३ र र　१　१ ५　२
तुवा२३न्तूर्यातरौहो३ । ऊम्मा२ । ष्या२तो३५हाइ ॥ ११ ॥

अस्य व्याख्यानम्—१भा० ६२४ पृष्ठे द्रष्टव्यम् । ११

१　२　२र　१　१　१　१
† एवाएमा । हा९अस्ति२रिया । इडा । वृ ।
२　१ २　१ २　२ १　१
हाउवा । आया । वाडा । दित्यमहा९२असाइ ।

---

* "विषभिश्व"—इति आ० ब्रा० ३, २, १३ ।

† "यज्ञसारथि च"—इति आ० ब्रा० ३, १, १३ ।

१ १ २ १ २ १ २ २र १र
इडा । हरिः । हाउवा । आथा । माहः । तेसतोमहि-
र १ १ १ २ १ २
मापना२इष्ठमा । इडा । मतिः । हाउवा । आथा ।
१ २ २र१ १ १ १११ १
माङ्गा । देवमहा२ऽ२असाइ । इडा२३४५ ॥ १२ ॥

अस्य व्याख्यानम्—१भा० ५६८ पृष्ठे द्रष्टव्यम् । १२

१३ साम २भा० २५३ पृष्ठे मुद्रितम् ।

१र र १र र १र र २र
* हाङ्म् । ३ । योवा । ३ । योवाहाइ । ३ ।
१र२ १ २ १ २र १र२ १ र २ १र १ २ १ र २ र १ २र
यएकइद्विदयते । एकऽसमैरयद्वधे । वसुमर्त्तायदाशुषे ।
१र२ १ र २ १र १र र २र १ २ १र २र १ २र १
एकऽसमैरयन्महे । ईशानोअप्रतिष्कुतः । एकोवृषावि-
र २ १ र २ १ १र र १र र १र र
राजति । इन्द्रोअङ्ग । हाङ्म् । ३ । योवा । ३ । योवा-
२र १र ऽ २ २ ०१११११
हाइ । २ । योवा३हाउ । वा३ । ई२३४५ ॥ १४ ॥

अस्य व्याख्यानम् १भा० ७६९ पृष्ठे द्रष्टव्यम् । १४

१ २ १ १र र २र २र १र र
† होवाहाइ । योनः । होवाहाइ । ३ । औहोवा-

---

* "एकवृषञ्ज"—इति आ० ब्रा० ३, २, १३ ।

† "विदथञ्ज"—इति आ० ब्रा० ३, २, १३ ।

२　१ २　१ २　१ २　१२र २र
हाइ । ३ । इदामे । इदामे । पुराए । होवाहाइ । ३ ।
२र १र र २　१ २ १ २ १ २ १र र २र
औहोवाहाइ । ३ । प्रवाए । स्यआए । निनाए । होवाहाइ ।
र १र र २　१ २ १ २ १ २ १र र
३ । औहोवाहाइ । ३ । यतामे । उवाए । स्तुषाए । होवा-
२र　२र १र र २　१ २ १ २
हाइ । ३ । औहोवाहाइ । ३ । सखाए । यआए ।
१ २ १ २ १र र २र　२र १र र २
द्रमूए । तयाए । होवाहाइ । ३ । औहोवाहाइ । २ ।
२र १र ऽ २　२　१ २१　१११
औहोवा३हाउ । वा३ । हसबृहन्नमा२३४५ः ॥ १५ ॥

अस्य व्याख्यानम् ऋग्यम् । १५

२र　२ र र　१ २　२र १र र
* हाउ । ३ । ऊवेविराजꣳस्वराजम् । ३ । हाओवा ।
२ १ २ २ १ ५ २ २ १
३ । हा३ओ२३४वा । हा३ओ२३४वा । हाउवा । मह
र २ र र　२ र १र २१र　२११ २र
त्वामअजीजने । अभ्रातृव्योअनात्वम् । महइद्रमजी-
र १ र २　१ र ११र　२ र १ २र र
जने । अनापिरिन्द्रजनुषासनाद । स्यभ्रातृव्यमजीजने ।
२१र र २ १ २ र २र　२ र र १ १
युधेदापित्वमिच्छसे । हाउ । ३ । ऊवेविराजꣳस्वराजम् ।

* "भ्रातृव्यश्च"—इति सा० ब्रा० १, २, १२ ।

२र ३र र १ १ ५ २
३। हाओवा। ३। हा३ओ२३४वा। २। हाउवा३।
२ २ १र ३ १ १२१
ए३। अभिभूरसी२३४५॥ १६॥

अस्य व्याख्यानम् १भा० ८१६ पृष्ठे द्रष्टव्यम्। १६

१ १ २र १ १ २ १र ५ २
* हाउरेवा। तीर्नाः। इहा। सधमादा२। हा
२ ५ २ १ १ २ १
३१उवा२३। ई३४डा। इन्द्रा२इसन्त्। इहा। तुवि
र ५ २ २ ५ १ र १
वाजा२ः। हा३१उवा२३। ई३४डा। चुमा२तोया।
१ २ १ र ५ १ २ ५
इहा। भिर्मदेमा२। हा३१उवा२३। ई३४डा॥ १७।

१ १ १ १ २र र १ १
† रा। वता२इः। नाः। इहा। औहोहो। इडा।
२ २र १ १ १र र १ १ २
सधा२। मादाइ। इहा। औहोहो। इडा। इन्द्रा२इ।
२ १ १ २र र १ १ २ २र १
सन्त्। इहा। औहोहो। इडा। तुवा२इ। वाजाः।
१ २र र १ १ २ २र १ १
इहा। औहोहो। इडा। चुमा२। तोया। इहा।

*, † "रैवते द्वे"—इति आ० ब्रा० ३, २, ११।

२र र १ १ २ २र १ २र र १
औहोहो । इडा । भिर्मा२ । देमा । इहा । औहोहो ।
१ २र १ २र १ २र१ १ १११
इडा । एरा । एवू । एरे२३४५ ॥ १८ ॥

अनयोर्व्याख्यानम्—१भा० ३५३ पृष्ठे द्रष्टव्यम् । १७,१८

९१ साम—२भा० २५४ पृष्ठे मुद्रितम् ।

१ २ २१र र र र र र र
* एआया । सुचाहरिस्यापुनानोविश्वाद्वेषाꣳसित-
१ १ १रर २ २ २ १ २
रतिसयू२ग्वभाइः । इडा । सूरोनसयू१ग्वा२भीः । धारा ।
२१ १ १ १२ २ १
पृष्ठस्यरो२चताइ । इडा । धारा । पृष्ठस्यरो२चताइ ।
१ १ २ २ १ १ १रर
अथा । धारा । पृष्ठस्यरो२चताइ । इडा । पुनानो
२ २ २ २१र र र र २ ४ ५
अरुषो१हा२रीः । विश्वायद्रूपापरिया । मियार । क्वाभीः ।
२ १रर १ १ २ १ ११
सप्तास्येभिरा२३हो । क्वाभिरा३१उवा२३ । इट्इडा २ ३
११
४५ ॥ २० ॥

अस्य व्याख्यानम्—१भा० ९२५ पृष्ठे द्रष्टव्यम् । ९०

२ र र र १र १ २र र र र
† आभित्वापूर्वनोनुमोवा । आदुग्धाइवधेनवईशान

---

* "नित्यवत्साव"—इति व्या० ब्रा० ३, २, १३ ।

† "वसिष्ठस्य च रथन्तरम्"—इति व्या० ब्रा० ३, २, १३ ।

१ २ १ २ २ १ ४
मस्यजगतः। सुवा२३ईशाम्। आइशानमा२३इन्द्रा३।
१ २ ४२ ५ ५ १
तास्थू२३४षा। ओवाइ। हाउवा। अस्॥ २१॥

अस्य व्याख्यानम्—१भा० ४८० पृष्ठे द्रष्टव्यम्। २१

३ २ १ २ ३ २ १ २ १२ १
* अयंवायाउ। २। अयंवायाउ। त्वामिद्धाइ।
२२ १२ २२ २ १२ २२ १२
हावामहाइ। ३। सातौवाजा। स्याकारवाः। ३।
२२ १ २२१ २२ १ २२ १२
त्वांवृत्राइ। ष्वइन्द्रसात्। पातिन्नराः। ३। त्वाङ्काष्ठा।
२२ १ ३२१ २ ३२ १
स्वर्वताः। ३। अयंवायाउ। २। अयम्। वा२।
३ ५२ २ १२ २ १ २ १ १२ २
या२३४। औहोवा। ए। त्रिवृतंप्रवृतम्। २। ए। त्रि
१ २१ १ १ १ १
वृतंप्रवृता२३४५म्॥ २२॥

अस्य व्याख्यानम्—१भा० ४८१ पृष्ठे द्रष्टव्यम्। ११

१ २ ३ १ १२ ३ २ ३
आक्रन्दयकुरुघोषम्महान्तꣳ
२ ३ १ १ ३ १ २ ३ २
हरीइन्द्रस्याभियोजयाशू।
२ १ २ ३ २ ३ २
मर्माविधन्ददतामन्योअन्यꣳ

---

* "जमदग्नेश्च साम्नम्"—इति स्वा० मा० ३,२, १३।

३ १ २ २ २ ३ १ २
शल्यात्मापततुश्लोकमच्छ।

२उ ३ १ २ ३ १ २ ३ १ २
प्रयच्चक्रमरावृणेसनताअभ्यवर्त्तयत्।

२उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ज्योगित्तिस्रओहातैशयातैकेशवच्छिरः ॥ २३॥

इयमृक्। गानग्रन्थेऽस्याः पाठकारणं व्याख्यानञ्च मृग्यम्। २३

२ ३ ३ २ १ २र ३ १ २
आ। क्रन्दय। कुरु। घोषम्। महान्तम्।

२ ३र १ २ १ २र ३ २ ३ ३ १ २
हरीइति। इन्द्रस्य। अभि। योजय। आशूइति।

३ १ २र ३ १ २र ३ ३ २
मर्माविधम्। मर्म। विधम्। ददताम्। अन्यः।

३ २ ३ २ ३ २ ३ १ २ ३ २
अन्। यः। अन्यम्। अन्। यम्। शल्यात्मा। शल्य।

३ ३ १ २र १ २र २ २ ३ २
आत्मा। पततु। श्लोकम्। अच्छ। प्र। यत्। चक्रम्।

१ २र २ ३ ३ १ २ ३ १ २ ३
अरावृणे। अ। रावृणे। सनतै। अभ्यवर्त्तयत्। अभि।

१ २र २ २ ३ २ ३ १ २र
अवर्त्तयत्। ज्योक्। इत्। तिस्रः। ओहातै। शया

१ २र १ २र
तै। केशवत्। शिरः ॥ २४ ॥

प्रदर्शितर्चः पदपाठ एषः। गानग्रन्थे पदपाठकारणं मृग्यम्। २४

२र १ २ १ र १
* आक्रान्दयोवा। कुरुघोषम्महा२। आन्ता२म्।
१ र र र १ र र १ र
हरीइन्द्रस्याभियोजया२। आशू२। मर्माविधन्दद्दता
१ २ १र र र
मन्यो२। आन्या२म्। शल्यात्मापततुश्लोकमा२३।
२ ३ ५र र १
आ२। क्का२३४। औहोवा। अस्॥ २५॥
२र १ १ १ १
† हाउ। ३। अस्। ३। फट्। ३। म्टस्। ३। हस्।
१र ऽ १ ऽ १र र १र र ऽ १र ऽ
३। प्रायर्त्। चक्र२म्। आरा२। आव्णा२इ। सान२।
१र ऽ १र ऽ १र ऽ १र र ऽ १ ऽ
ताअ२। भ्याव२। ताय२त्। जीयो२क्। इत्ती२।
१र र ऽ १र र ऽ १र र ऽ १र र ऽ १र ऽ
ह्वाओ२। हातै२। शाया२। तैके२। शाव२त्।
१र ऽ २र १ १ १
शाइर२ः। हाउ। ३। अस्। ३। फट्। ३। म्टस्। ३।

---

* "पञ्च पविमन्ति महासामानि ( तत्र प्रथम मिदम् ) शर्वस्य प्रथमोत्तमे ( तत्र प्रथम मिदम् ) * * * यथापरमग्नेर्हरसीद्वे ( तत्राप्याद्य मिदम्)"—इति आ० ब्रा० ३, २, १३।

† "पञ्च पविमन्ति महासामानि ( तत्र द्वितीय मिदम् ) * * * रुद्रस्य त्रीणि ( तत्राद्य मिदम् ) * * * अग्नेर्हरसी द्वे ( तत्र द्वितीय मिदम् )"—इति आ० ब्रा० ३, २, १३।

१ ६ ५र र २र१ २र १
हस्। २। हा२३४। औहोवा। एअस्। एफट्।
२र१ २र१ ३ १ १ १ ११
एम्टस्। एहस्। ई२३४५॥ २६॥

२ १ २ १र ऽ १ ऽ १र र ऽ
* अभ्याभूः। ३। प्रायर्त्। चक्रम्। आरा२।
१र र ऽ १र ऽ १र ऽ १र ऽ १र ऽ
आव्णा२इ। ३। सान२। ताअ२। भ्याव२। ताय२
१र र ऽ १ ऽ १र र ऽ १र र ऽ
त्। ३। जीयो२क्। इत्तो२। स्वाओ२। हातै२। ३।
१र र ऽ १र र ऽ १र ऽ १र ऽ २ १ २
प्राया२। तैके२। प्राव२त्। शाइ२२ः। ३। अभ्याभूः।
१ १ २ ५र र १ २ २
२। अ। भ्या२। भू२३४। औहोवा। हस्प्रहस्ए३
१ २ १ १ १ १
चक्षू२३४५ः॥ २७॥

२र २१र र र २ १ १
† हाउ। ३। हुरोहरोहरोहरः। ३। वृश्चप्रवृश्च

---

* "पञ्च पविमन्ति महासामानि (तत्र तृतीय मिदम्) * * * वट्रस्य त्रीणि (तत्र द्वितीय मिदम्) * * * चुरस्य हरसी द्वे (तत्र प्रथम मिदम्)"—इति श्या० ब्रा० ३, ९, १३।

† "पञ्च पविमन्ति सामानि (तत्र चतुर्थ मिदम्) * * * वट्रस्य त्रीणि (तत्र तृतीय मिदम्) * * * चुरस्य हरसी द्वे (तत्र द्वितीय मिदम्)"—इति श्या० ब्रा० ९, ९, १३।

१ २ २५ १ २१ र २र २ १ २र
पृश्निन्वि। ३। हाउ। ३। वा। प्रयच्चक्रमरावणे। सनता
१ २ १र २ १ र २र र १ र २र १र २ १
अभ्यवर्त्तयत् । ज्योगित्तिस्रओहातै। श्यातैकेशवच्छिरः।
२र २ १र र २ १ २ १
हाउ। ३। हुरोहरोहरोहरः। ३। वृश्नपृवृश्नपृश्नि
२ २५ २र २ १ २ १ २
न्वी। ३। हाउ। ३। वा। ए। वृश्नपृवृश्नपृश्निन्वी। २।
२र २ १ २ १ ३ १ १ १ १
ए। वृश्नपृवृश्नपृश्निन्वी२३४५ ॥ २८ ॥

तस्या एवर्चः सामानीमानि चत्वारि। एषां सायणादि-कृतं व्याख्यानन्तु नोपलभ्यते।
२५—२८

२र १ र २ १ २ १ २ १ २ १र २ १र २ १
* हाउ। ३। वयोवृहद्दत‌ं हविर्भद्रा‌ं स्वधा‌ं स्वय‌ं
२ १ २ १र २ र १ १ १
स्कृणवद्दृषमूर्ज‌ं रजःसुवः। ऊम्। ३। हो। ३। ह‌ं। २।
३ ५र र २ १ र २र र र १ १ २र
ह‌ं२३४। औहोवा। अभित्वाशूरनोनुमोहस्। अदुग्धा
र १ र १र र २ १ २ १ १र र २
इवधेनवोहस्। ईशानमस्यजगतःस्वर्दृश‌ंहस्। ईशान
१ र २र १ र २ १ २ १ २ १ २ १र
मिन्द्रतस्थुषोहस्। हाउ। ३। वयोवृहद्दत‌ं हविर्भद्रा‌ं

* "पञ्च पविसन्ति महासामानि (तत्र पञ्चम मिदम्) शर्वस्य प्रथमोत्तमे (तत्रोत्तम मिदम्) * " * महत्योर्द्वेरः * * * लोकानां शान्तिरुत्तमम्"—इति आ० ब्रा० ३, १, १३।

२१र २ १ २१२१र२ १ १ १
स्वधाᳫं स्वयᳫं स्कृण्वइषमूर्जᳫं रजःसुवः। ऊम्। ३। द्यो।
१ १ ५र र २र १र
३। हᳫं। २। हᳫं२३४। औहोवा। ए। वाक्।
२र १ र २र १ २र २ १ २र १र २र २ १
ए। इडा। ए। सुवः। ए। बृहत्। ए। भाः। ए। अर्क
२ र र १ २ १
मर्चतदेवावृधᳫं हस्॥ २९॥

अस्य व्याख्यानम्—१भा० ४८० पृष्ठे द्रष्टव्यम्। २९

१ २ २ १ ३ २ १ १ १ २र
* हौवा३हा३। आ२इ। हिया३४५। हाउ। ३।
१र २ र र १र २ र र २ २ ५र र
एहियाहाउ। ३। एहियाहाउ। एहिया३४। औहोवा।
२ १ र र २र १ १ २ २ १
इहप्रजामिहरयिᳫं रराणोहस्। हौवा३हा३। आ२
३ २ १ १ १ २र १र २ र
इ। हिया३४५। हाउ। ३। एहियाहाउ। ३।
२ १र ७ ३ ५ १ २ २ १
कयानश्चाइ। चआ२भू२३४वात्। हौवा३हा३। आ२
२ ३ १ १ १ २र १र र र र १र २ र
इ। हिया३४५। हाउ। ३। एहियाहाउ। एहिया
२ १र २ ५र र २र १ र र २ १र १
हाउ। एहिया३४। औहोवा। रायस्पोषायसुक्रताय

* "पञ्चनिधनं वामदेव्यम"—इति आ० ब्रा० २, ९, १३।

१र २र१ १ २ १ ३ २ १ १ १ २र
भूयसेहस। हौवा३हा३। आ२इ। हिया३४५। हा
१र२र र २र१ २१ १ २ २
उ। ३। एहियाहाउ। ३। ऊताइसदा। वाइ:सा२३४
५ १ २ १ ३ २ १ १ १ २र
खा। हौवा३हा३। आ२इ। हिया३४५। ३। हाउ। ३।
१र२र र १र२र र ३र २ ५र र
एहियाहाउ। एहियाहाउ। एहिया३४। औहोवा।
१र २र१ २ १ २ १ १ २ २ १ ३
आगन्वाममिदम्बृहद्वस्। हौवा३हा३। आ२इ। हि
२ १ १ १ २र १र२ र र २ १र
या३४५। हाउ। ३। एहियाहाउ। ३। कयाश्चाइ।
३ ५ १ २ १ ३ २ २र १ १ १
छया२वा२३४र्त्ता। हौवा३हा३। आ२इ। हिया३४५।
२र १र२ र र १र२र र ३र २
हाउ। ३। एहियाहाउ। एहियाहाउ। एहिया३४।
५र र २ २ २र१ २ १ २ १ १ २ २ १
औहोवा। इदंवाममिदम्बृहद्वस्। हौवा३हा३। आ
२ २ १ १ १ २र १र२ र र २ १र
२इ। हिया३४५। हाउ। ३। एहियाहाउ। ३। कया
७ ३ ५ १ २ २ १
श्चाइ। छया२वा२३४र्त्ता। हौवा३हा३। आ२इ।
३ २ १ १ १ २र १र २र र १र२ र र
हिया३४५। हाउ। ३। एहियाहाउ। एहियाहाउ।

२र २ ५र र २ र १र २ १ २ १ २र १ २ १ २
एहियाउ४। औहोवा। चराचरायवृहतइदंवाममिदम्वृ
१
हद्वस्॥ ३०॥

अस्य व्याख्यानम्—१भा० ३८४ पृष्ठे द्रष्टव्यम्। ३०

२र र र र र २१ २ र र २र
* होइयाहोइयाहोइया३४३पिब। मत्स्वाहाउ। ओ
र र २ र र २ र २ र र २
जोहाउ। सहोहाउ। बलꣳहाउ। इन्द्रोहाउ। व
र र २ र २ र २ र २र र
योहाउ। बृहद्धाउ। ऋतꣳहाउ। स्वर्हाउ। ज्योतिर्हाउ।
२ २ २र र र ३र २ २ १र र २
दा३धे। हाउहाउहाउ। औहो१इ।३। पिबासोमाम्।
१ २ १ २र २र र ३र २
इन्द्रमा। दतुत्वा।३। हाउ। २। हाउ। औहो१इ।३।
२ १र र १ २ १ २र २र र ३र २
पिबासोमाम्। इन्द्रमा। दतुत्वा।३। हाउ२हाउ। औहो१
२ १र र १ २ १ २र २ र
इ।३। पिबासोमाम्। इन्द्रमा। दतुत्वा।३। मत्स्वा
र २र र र २ र र २ र २ र
हाउ। ओजोहाउ। सहोहाउ। बलꣳहाउ। इन्द्रो
र २र र २ र २ र २ र
हाउ। वयोहाउ। बृहद्धाउ। ऋतꣳहाउ। स्वर्हाउ।

* "इन्द्रस्य मदान्विराजं वसिष्ठस्य वा"—इति ब्रा० ग्रा० ३,२,१२।

